मीयमान समित्कुशपूलिकाप्रगुणयूपारणिफलककूटसंकटद्वारपर्यंतो,यायजूकसमानीत पशुशावकनिकायकांतिमेचाकितोपशल्यः, श्रवणपुटनिपीयमानहरिकथारसजनितानंदपुष्यत्पुलकमुकुल निचोलितकलेवरवृद्ध तुमुलितचत्वरप्रदेशो, विस्मरणौषधिविशेषो विषमशरविलसितानां, पश्यतोहरःपातकानां, प्रपामंडपः भवनिदाघतप्तानां, कालदंडःकलिकालस्य, कुलवैतालिकः कृतयुगमहापते, रन्यादृशैः अपरिमिताद्भुतगुण समुदायैः, विस्माययतीव निखिलभुवनधातारमपि विधातारं,

मध्येस्यमंजुलदलं वटमुच्चशाखा
काडप्रकांडकवलीकृतदिग्विभागं ।
कल्पांतवातविनिपातितकालमेघ
शंकावकाशमभजंत ततोमुनींद्राः ॥

मुक्त्वाफणींद्रमपिमोहनमिंदिरायाः
वक्षोपियस्यवटपत्रपुटींवरेण्यां ।
कल्पावधौशिशयिषुः कपटार्भक
स्सन्पर्यंकिकां वितनुते भगवान्मुरारिः ॥

मूलप्रांते यस्यमुग्धेंदुचूडा युक्तिप्रौढैः योगिभिःसेव्यमानाः
आम्नायानामर्थसंपत्तिरीतेः प्राणा, गौर्याः प्राड्विवाकाभवंति

तस्यकिलातिप्रमाणविस्तारभाजस्तरुणशुकतनुश्यामलनवगोमय-(इवालेपेन)† विधानमसृणितायां, मरकतशिलानिर्मितायामिव मूलवेदिकायामायतकृष्णिकाभंगिशतकल्माषितसारंगतारक्षवचर्मवर्मितमृदुलदल संदर्भितदर्भासने निषेदिवांसं, प्रशस्तमतीनां स्थिरहस्ताविस्तृतपुस्तक-

† लेपन

विभागानां निजवदनकोकनदचंचरीकायमाणचारुविलोचनानां उपनिषदर्थनिश्चय(स)मर्थयमानं, अभ्रंकषविटपिविटपपटलिकाव्याहन्यमानस्वकिरणावतरणस्य विचित्रानुभावलोकनीयस्य समा‡लोकयिषयाधरातलमवतीर्णमिव सहस्रभानुं, कलिकालनिरसनकलितावतारमिव कमलासनं हृदयपुटकिनीकुसुमकुटीरवास्तव्यकैटभदमनबहिर्विगलदंशुजालिकानिचोलितस्येवश्यामलस्य विसृमरैः कलेबरस्यालोकप्रपंचैरकालीनमिव मेघनिकरं दिवसमुप(नी)§यंतं प्रविकस्वरबालवारिकर्णिकारकलिकासखीनां कुलपालिकानामिव कुशेशयबंधुकिरणनिकरस्य, बाडवज्वालानामिव संसारसागरस्य, शाखाशिल्पानामिव तपोहाटकवटस्य, मातृकाणामिव सौदामनीदामनिर्माणस्य, जटाटवीनां कवलितगगनकटाहोदरकुहरैः पिंगलिमप्ररोहैर्नैजावतारमिव दर्शयंतं, लेलिह्यमाननासिकावंशमूलया परिणामपिंजरकरवीरदलाकारजुषामुखस्थयेव तत्वज्ञानदीपिकया, मूलिकयेवजटालताप्रतानस्य, हिरण्मयडोलासूत्रिकयेव लपनवनजलावण्यलक्ष्म्या, मुकुलकंदलिकयेव योगचंपकस्य, गोपीचंदन रसचमत्कृतया तनीयस्यास्फुरदूर्ध्वपुंड्रपुंड्रिकया परिकर्मितफालप्रदेशं, करुणारसपूरनिरंतरनिर्याणकच्छस्थलाभ्यां स्वमूर्तिविभागनिदानहरि स्मरणानुमानीभवद्दृढनिमीलनाम्रेडनपरिपाटलाभ्यां विषयसंन्यासपारिगृहीतकाषायाभ्यामिव विलोचनाभ्यां इतस्ततोनुगृह्णंतं, व्याख्याविलासविवृताधरपुटविसृत्वरीभिर्बालवलाहकवारिशकिरप्रथमसंगमविकचकुटजकुसुमकेसरद्रोहिणीभि, रुत्पतंतीभिरिव शारदाविजयकेतनदुकूल पताकाभिर्वल्गंतीभिरिव विद्यामृतप्रवाहडिंडीरमंडलिकाभि, रुड्डीयमाना-

---

‡ लु § न

भिरिव वदनसरोरुहमरालिकाधोरणीभि, र्दंतकांतिलहरीभिं, द्वितीयमिव दुग्धसागरमुत्पादयंतं, बिसमिवामलतंतुसंततिसोदरीभि, र्निझरणीभिरिव ब्रह्मवर्चसशैलस्य, चामरिकाभिरिव योगसांम्राज्यस्य, मृणालिकाभिरिव धर्मपुंडरीकाकरस्य, हारमालिकाभिरिव सत्याधिदेवतायाः, कुसुमावल्लीभिरिव कृपावाल्लिकाया, महीयसीभिः ब्रह्मसूत्रपृलिकाभि, स्सीमंतितवक्षोभागं, कटितटोपरिवेष्टितकृष्णसारत्वचं, कालभुजगानिर्मोकपरिवेष्टितमिव चंदनतरुं. कुवलयाकरशंकासमागतेनेव चक्रवाकयूना, पावनसलिलपूरितेन कमंडुलुना, परिमंड्यमानपार्श्वदेशं ऋतुगणमिव प्रज्वलितशुचितपस्सुरभिं, दाडिमवनमिव सततशुकसेवितं, सुहृदिवानुभूयमानसमाधिसुखं, गंधर्वतंत्रमिव कल्पितश्रुतिमंडलविभागं, प्रभंजनकुमारमिव प्रशमिताक्षदौर्ललित्यं, उज्वलसुषुमाभिराममुत्फुल्लकमललोचनमुन्नतनासावंशमुदारवदनप्रसादं युगपदेव ते सविनयाभगवंतं व्यासदेवं समानंसिषुः ॥ अथ तपसांनिधिः समुत्थितान्सरभसाशिष्यजनपरिग्राहितबृसीसमर्पणादि समुचितोपचारमुदितमनसोप्रकटितार्जवानपि प्रवणीभवतः, करुणापयः प्रणाळिभिरिव कटाक्षवीक्षाभिः पावयमानो, मधुरासारकिरागिरा तानभाणीत् । अये तपोधनाः महनीयतेजःप्रभावानां परिगृहीततृतीयाश्रमाणामिव दिनमणीनां भूयसः कालादागमनं, अपिस्वागतं ।

भद्रंकिमारण्यफलाशिनांवः सारंगयूथैकसहायभाजां ।
निर्विघ्नताश्रीर्नियमाक्रियासु जागर्तिकिंवा सफलोदयासु ॥

किसलयतिनपीडां किंनुतापोवनीनां
विटपिपटलिकाभिर्व्याहतिर्दाववन्हेः ।

अनिशमातिथिसाधोः किंसपर्याकृतार्थाः
विलसतिदृढशाक्तिर्वैष्णवीकिंनुभक्तिः ॥

इत्थं क्षेमानुयोगपुरोगामियत्तामिवापरोक्षयंतीं सुधामधुरिम्णो, -न्निशम्य ते भगवतः पाराशरस्य वाणीमनणीयसीभिः आनंदकंदलीभिः कवलितमनसः सविनयमेवं व्यजिज्ञिपन् ॥ ब्रह्मन्कुतोवकाशः कुशलेतर प्रसंगस्य भगवदनुकंपानदीमातृकाणां। किंतु पुरंदरपुरोगवृंदारकवृंद कांचनमकुटावतंसायितचरणारविंदस्य भारतीजानिकुलभागधेयस्य त्रि-भुवनस्वैरपरिचंक्रमणविलास, रसिकस्य निरंतरोपकुंचितपाणिकमलां चितविपंचीगुणपद्यारोपितावीवेधावतारक्रमाबिरुदावलीगानकलावशीकृत कमलासखमानसस्य भागवतमूर्धन्यस्य तत्रभवतो नारदस्य मुखादद्यैव जगत्पाषंडाक्रांतमस्माभिःश्रुतं ।

भवतोधिगतान्येतान्यखिलानि तपोनिधे ।
बलाहकैरिवास्माभिरंभांसीव पयोनिधेः ॥

तदा प्रसंगेन तापसगोष्ठीभिः साराभिर्युगधर्मं पृ(छ)*मानेन पादे चैवहिकलेर्विश्वसनीयवेषैः पाषंडैरुत्पातवातैरिव जलनिधेः जगतः कलुषीकारो महान् भविष्यतीत्यन्वग्राहिभगवता । तथाप्यधुनैव तरुणभुजगगरलस्येव बहुलदिवसावसानसंतमसस्येव प्रलयानलधूम निवहस्येव समुज्जृंभमाणस्य किमस्य कारणं कदावाशांतिश्च ।

इति प्रकृष्टैर्मुनिभिः सपृष्ट प्रहृष्टचेताः प्रतिसंबभाषे ।
पाराशरस्तान्परमार्थवेदी मंदस्मितस्यंदनसुंदरोष्ठः ॥

* छय

समयसमुचितोनुयोग एष स्वचरितविद्युतिभीतभीतधीभिः
व्यरचि(यतस्त)†पोधुना भवद्भिः समवहिता शृणुताखिलं वदामः ।
मणिमानिति वातसूनुना (हतः) सहयुध्वा समरे पराजितः
असुराधिपतिर्हरं जगद्गुरुमानंदयदर्चयापुरा ॥

संप्रीणितेन मनसा शशिशेखरेण
देयं किमित्यभिहितो दितिसूनुरेषः ।
इच्छामि जेतुमतिमात्रबलेन भीम
मित्यब्रवीद्विपुलमानससाहसश्रीः ॥

एवं दुर्वितरं वरं प्रार्थयमानस्य मानधनाग्रेसरस्य वचनमाकर्ण्य तस्य दरहसितविकासितगंडपालिश्चंडिकाजानिः पुनरप्येवमब्रवीत् ।

शक्योजेतुं किमुसभगवान्ससलोकीविधाता
मुख्यप्राणो मुरदनुजभिद्भक्तमूर्धन्य एषः ।
कृत्वा मायामतमभिनवं मोहनायामुनात्वं
किंचित्कालं शिथिलयमतं तस्य तत्वावबोधं ॥

इति पुरशासनादासादितवरेण, केरलभुवि द्विजकुले कृत जन्मना, शंकरनामधारिणा, विविधमायामहीयसा, पापीयसानेनैव, वेद पदवीखंडनं, चक्रे । तत्रांतरे तस्य मणिमतो मायाविलासनिरसने महानुभावेन, पूर्वमखर्वतरगर्वशर्वरीचरसार्वभौमकुलनिर्वापणधूर्वहसर्वंकषदोर्दंडचंडिमपरिपूरितदाशरथिमनोरथेन, प्रकटितांजनेयभावेन, तदनुकनकपट्टश्रृंगारितप्रोद्दामभयानकगदामुखपायसपारणायित धार्तराष्ट्रशतानंदितमुकुंदेन, दर्शितकौंतेयभावेन, पश्चाद्वैदिकाचारप्रवर्तनबद्धकच्छेन, मध्वमुनिनामधेयप्रसा(रितेन)‡सकलभुवनत्राणेनमुख्यप्राणेन, ब्रह्मसूत्रस्य

† खलुत ‡ धित

मदनुज्ञया-तदा विरचितमदूष्यंभाष्यं । तत्तु कालमेतावंतं विपाक्रिया-वसानेन माननीयेन पुरशासनवरेण दारुणेन राहुणा कवलितमिव दुश्शकोन्मेषमवर्तत मंडलं चंडभानोः । इतःपरमचिरादेव कवेर कुमारिकाती(रे)* शेखरबंनूरुवास्तव्ययोश्चिरंमदुपासनेन माननीयेन पुत्रीयतोः भागवतावतंसयो, रवतीर्णयोरिव भुवमरुंधतीवसिष्ठयो, स्तप-स्तपतोरिव स्वाहानलयो, रतिपावनचरितयो, लक्ष्मीबह्मणसुमतिनाम्नो दंपत्योर्मदुपासनमाहिम्नातिपावनचरित्रसर्वातिशायिशेमुषीविशेषकंदलितः कुमारो भविता ॥ तस्मिंश्चमदनुशासनं शेखरमिव शिरसावहन्, सएव पुनरपि भावितावेशरूपावतरणमंगलो, मुख्यप्राणो, मानुषस्यैव भावमनु-कुर्वाणो ब्रह्मण्यमनोरथमपि सार्थकीकृत्य विविधचरित्रविचित्रैः अखिल मपिभुवनं विस्माययन्, जांगलिकइव मंत्रेणसरीसृपवेगं, तरणिरिव किर-णेन तमःप्रचारं, घनाघनइववर्षणघर्मतापं, भिषगिवभेषजे(न)†पुराकलित निजभाष्यप्रवर्तनेन विमतप्रपंचितदुर्मतमुन्मूलयन् संस्थापयिष्यति-सर्वाणिधर्माणि, तदिदानीं माभैष्टेत्येवमनुगृह्णंतंभगवंतं व्यासं प्रणिपत्य मुदितमुदिताः तदनुमतिपुरःसरं सर्वेपि मुनयो यथागतं प्रत्ययासिषुः ॥

इति सोमनाथकवि विरचिते व्यासयोगिचरिते प्रथमोल्लासः

---

अथ कदाचिदतीतेषु वासरेषु कतिपयेषु, तत्र वह्निपुरे, निरवशे-षितानिखिलनिशामुखनिशांतकरणीयकठोरविविधाचरणकर्शितांगी, घर्म

---

*र †नामयं

समयपरिम्लानेवनवमालिका, दिनमणिकिरणपरितापितेवदर्शेंदुलेखा, महीयसा गुणेन सौंदर्यादिना, द्वितीयेव कमला भगवती साक्षाल्लक्ष्मी, श्चिरादनपत्यतादूयमानमनसा, दुग्धफेनपिंडपांडरदुकूलोत्तरच्छदेस्पाटिक पर्यंकेकलशसागरोदरपरिकल्पिते दर्वीकरसार्वभौमतल्पे शयानमिव नारायणं कुलवृद्धिकंदलाय संततमनुवर्तमानया कयापि चिंतया; मुहुर्मुहुर्निश्वसंतं प्रशस्तगुणवैभवं प्रचुरतरसंपत्तिं परमपुरुषाश्रयमपि प्रदीपैकसहायं वल्लभं बह्वणसुमतिमभाषिष्ट ।

किंपटैः किंपिटीरैर्वा किंधनैः किंनुबांधवैः ।
किमाहारैः विहारैर्वा दंपत्योरनपत्ययोः ॥

अये कष्टं किमन्यदनपत्यतायाः ।

तिरयतियाकवाटफलकेव, लोकयो रुभयोः सुखागमनद्वारं । ग्लपयति या दवानलशिखेव वनतरुपल्लवानि पितृगणमनांसि । जनयतिया-रजनीविरतिरिव कुवलय कुमुदयोर्दंपत्योः साधारणं दुखं । दर्शयति या दृशिरिव पटलदूषिता शोभनान्यर्थांतराणि । निष्फलयति या प्रवाताहतिरिव कमलमणि(गणाशानि)‡ सर्वधर्माणि । समापयति या चरमप्रणवलेखेव स्वाध्यायस्य कुलस्य प्रचारं ।

अपत्यहीनं कुलमागतस्य कथंप्रकाशः कमलागुणस्य
मधोरिवानोकहवाटशून्ये देशेमहांतं दधतोवतारं ।

तएव खलु धन्यमूर्धन्याः ।

पाणिद्वयेन तनयैः परिधूसरेण मामेति मंदवचसाप्यनुनाथ्यमानैः ।
आलेडितान्यमृतसख्यधुरंधराणि ये भुंजते जगति मंगलभोजनानि ॥

---

‡ गणशतानि

किंवा पूर्वतनेषु जन्मसु नताद्दशं सुकृतमावाभ्यां चरितं । तदास्तां । सहजालीकाःकिंशाकुनिकाः । वंध्याशिषःकिंवसुंधरानिमिषाः। उध्दतानुभावंकिमुपश्रवणं । निश्चयापटवःकिंनिषादयोषितः । विगतव्रिचारणाःकिंविप्रश्निकाः । गलिताभिधेयंकिंगौलिकावचनं । असिद्धिपरतंत्राःकिंपरममंत्राः । विरचितासुरभावःकिंव्यासदेवः । देवताशून्यानिकिंत्रिभुवनानि । अथवा समस्तं वितथमेव ।

पुष्यत्कृपालहरिपूर्णकटाक्षवीक्षा
संत्रायमाणजगता सकलोत्तमेन ।
कंसारिणास्मदभिकांक्षणपूरणाय
किंवा विलंबनविधिः क्रियते नजाने ॥

इति महीयसा शोकवेगेन करु(णा)†माचक्षा(णां)§ प्राणनिभां वल्लभां अमृतोपमेयैर्वचनैराश्वासयदाचख्यौच ।

मागाविषादमधुना महिले श्रुणु त्वं
वेगादिहस्फुरति मे विपुलोरुभागः।
विद्रावितानतभयो विमनस्थयोर्नौ
भद्रागमे सतुहरिर्भगवान्प्रमाणं ॥

इत्यनेन कुशलोदर्केण सब्रह्मचारिणेव सुधारसस्य, वैतालिकेनेव निद्राणहर्षस्य, प्रास्थानिकपटहेनेव शोकस्य, मनोरथमिव हस्तेन समर्पयतार्द्र(सा)‡नो, दयमानयावरवर्णिन्या, किमपि भाषमाणश्चिरादनति सुखं सुष्वाप । तदनु परितापमनयोरवेक्षितुमधीरैव शनैश्शनैरपयाति विभावरी समये । भवानीरमणनटनवेगभ्रश्यमानविधुमंडलइव शशि-

† ण § णः ‡ स

मंडलेगगनपथसंचारपरिश्रममपनोदितुमिवावतरतितटमपरांबुधेः । नभोमंडलमारुरुक्षोर्ज्योतिस्सार्वभौमस्य पुरस्सरेणारुणसौविदल्लेन किरणकनकवेत्रलतयासमुत्सार्यमाण इव दूरीभवति तारानिकरे । हिमकरविरहानलधूमधोरणीष्विवकुमुदवाटिकायामुत्पतंतीषु मधुकरीषु, पद्मसिजशय्याप्रबुध्यमानकमलामणिमेखलाक्कणितेष्विव समुन्मिषत्सु सत्सु सारसरणितेषु, पुटकिनीवनपर्यटनचटुलजलदेवताचरणमंजरीशिंजितेष्विव समुदंचितेषुकलहंसविरुतेषु, प्रत्युपाध्यायगृहदेहलीमंदमंदमध्ययनमुखरतांमुंचमानेषुमाणवकेषु, समारब्धपावनमधुमथनमंगलस्तोत्राडंबरेषु जरठभागवतेषु, पिपासतामग्निहोत्रधेनुस्तनंधयानांबर्बरारवैर्जर्जरितेषु यज्वभवनेषु ।

संमोदबाष्पसलिलैस्तरलीभवद्भिः
    आराललोचनचलाचलपक्ष्मपङ्क्तिः ।
स्वप्नोपलब्धकुशलाभ्युदया शुभांगी
    प्राबुद्ध सा प्रथममेव जवेन भर्तुः ॥

अनुपदमेवमुक्तानिद्रं, मुकुंद, हरे, मुरशासन, शरणंभवेति संकीर्त्यशयनतलादुत्तिष्ठंतं प्रियतमंप्रदक्षिणीकृत्य चमत्कृतनमस्क्रि(त्य)यासाजगादसबहुमानं । अये भद्रंभद्रं । अयंहिसुप्रभातोदिवसः । इदानींतुस्वप्ने परमकारुणिको, भक्तजनपारिजातः, सभगवान्पाराशरिः, स्वयमेवागत्य भद्रेप्रसादितोस्मि युवयोस्तपसादुश्चरेणेतिमधुरसासारमुचावाचावद*यमानंदयत् शरीरिण्येव शुद्धदेवतयाकयापिशंखशुक्त्यासुधारसबुद्बुदमुकुलाकारजुषा केनापिखंमौक्तिकमणिना कौमुदीघनसारपूरितब्रह्मांडक-

---

*न्न

रंडकेन मौक्तिकच्छत्रेणेव प्रज्ञासाम्राज्यस्य, मूलकंदवलयेनेव करुणा-लतायाः, दंतताटंकेनेव शारदायाः, स्फटिकपादपीठेनेव पद्मायाः, विधूतकलंकेन कलासमग्रेण स्थेयसा केनापिचंद्रमसा च शेखरितां कुांचून कांचनपात्रिका मदृष्टपूर्वां ममपाणौव्यसीसृ(ण)†त् । अनंतरं च कश्चिदंगण्यानुभावोनाम्ना ब्रह्मण्यः सद्यएव योगी समागत्य मनीषितं युवयोर्वर्धयिष्यति ॥ तदवश्यं युवाभ्यांतदनुशासनानुवर्तनजागरू-काभ्यां भवितव्यमिति अनुगृह्यांतर्दधे ॥ ततस्तां करतलेवर्तमाना-मवलोक्यकिमिदमिति मृदुविस्मयमानया तथैव समुदमीलि मयेति ॥ मंगलप्रथमावतारसरणिं वाणीमाकर्ण्य तस्याः समुदंचितरोमांचप्रपंचकं-चुकितसर्वावयवो हर्षमयमिव निखिलमपि लोकमवलोकयन्नभिनवमि-वात्मानं मन्यमानः, कैवल्यसुखमपिनिराकुर्वतीं (नस्वीकुर्वत) मनसा निरंतरोत्संगनिषण्णस्वकुमार(स्य) परिरंभणोत्सवमनुभवंतीमब्रवीत् ॥

पूर्वमाश्वासितं येन मयास्वंसोदबिंदुना ।
अद्यतं सागरीकृत्य मांमज्जयसिशोभने ॥

नजातुचिदपि गिरोमहतामपरथा भवंति । अधुना फलित-ममुना यतो जीवन्भद्राणिपश्यतीतिवचनेन । आवयो रत्रैवलक्ष्यते मणिमुकुरइव पुण्यचरितं ॥ किंनाम प्रसूते नारायणवरभक्तिका-मगवीति ।

मणि विरचितमंचान्मंदमुत्थायहृष्टः ।
चिरमथसमुपास्यन्स्नानपूर्वंदिनेशं ॥

---

† ज

अमृतरसधुरीणैर्हव्यजालैःसलाजैः ।
स्तुतिभिरपि सभिद्भिः तोषयामास वह्निं ॥

सार्धं द्विजन्मभिरसौ सकलश्रुतीनां ।
पारंगतैरपि च भागवताग्रगण्यैः ॥

धीमान्समारभतदेव गृहेविशेषा ।
त्पूजोत्सवं कलयितुं पुरुषोत्तमस्य ॥

तत्रांतरे

शिष्यौघेन यदृच्छयैवसमहांस्तेजोमयेनावृतो ।
भिक्षूणामधिनायको प्रतपसां ब्रह्मण्यनामामुनिः ॥

कावेरीं समुपाजगाम विलुठत्कल्लोल(माला)* वली ।
वाताघातविलोलितांबुजगलन्माध्वीकरीवर्धितां ॥

श्रेयः पट्टण गोपुरंदितिभुवांडंभच्युतिप्रक्रमो ।
निर्मर्यादकृपाप्रवाहलहरी निर्याणकच्छस्थली ॥

संसाराटविमार्गशौल्किकपतिः संमोदकंदश्रियो ।
निर्णीतिर्वचसामलीढजनुषां निद्रातियत्सैकते ॥

या खलुसकलपरममुनिजनावगाढसलिला परिणतपृथुफलभरा नम्रैराम्रैर्गगनकुहरविसृमरसौरभकुसुममाला गुरुभिरगुरुभिर्विटपजनित तरणिकिरणावतरणनिरोधैः न्यग्रोधैरामूलकलित फलस्तबकानिराडंबरैः औदुंबरैः शाखाभुजालिंगितलतावधूकैर्मधूकैः जलधरपदवीलंघना कलहोदारैः कोविदारैः वियोगिजनमानसवितीर्णगाढवरशोकैरशोकैः निस्सीममधुरिमप्रचुरीमंडितफलैःकंटकिफलैः मदनविजयपिशुनबहल-

---

* मल्ला

मुकुलैर्बकुलैः तांबूलिकापरिरंभसंपादितकुतुकैःक्रमुकैः धवलितदिगंतरालफलभारैर्नारिकेलैः घटितविशंकटतटप्रदेशा क्वचिद्विकचकुवलयचयशतभरितमधुरिमधुरीणमधुरससपीतिककरंबित बिब्बोकाडंबरलोललोलंबकदंबमेचकितापदेशेन निरंतरकालिंदीसन्निधानमिव संदर्शयंती । क्वचिदुच्चंडनालपुंडरीकषंडमंडनायमानकेसरसृजदुग्धीसमुद्धतजालपादमंडलपांडिमव्याजेनत्रिपथगासमागममिवागमयंती । क्वचिदुत्फुल्लकह्लारवातपर्यटनसरससारसमिथुनयूथमस्तकशोणिम विस्तारमिषेण सरस्वतीसंगमसंभावनामिवोद्भावयंती धात्रीव दक्षिणदेशस्य, जटालतेव मुक्तिकन्यायाः, प्रहारिकेव पातकमलिम्लुचानां, संमोदागमपद्धतिरिव सागरस्य, कल्याणपरंपरेव कवेरस्य, पण्यविशिखेव पुण्यसंचयानां, अर्गलेव दुर्गतिद्वारस्य, संव्यानशाटीव सर्वंसहायाः, वागुरिकेव भवभयमृगस्य, कीर्तिलतिकेव कैवल्यस्य, त्रिभुवनपरिपावनी सर्वासामपि सरितां अधिदेवताविजयते भागधेयलक्ष्मीरिव मध्यलोकस्य ॥

तदनुसलिलैःपुण्यैस्तस्याः सुधारससोदरैः ।
निभृतमवधीं नीत्वामाध्यंदिनीं नियमक्रियां ॥

सपदुमतिभिःशिष्यैः सार्धंतटे मुनिरुत्तरे ।
बहुल विपुलं बन्नूराख्याग्रहारमियायतं ॥

आकृष्य सह्याद्रितटाज्जवेन कूलंकवेरात्मजया तरंगैः ।
उत्कूलितस्याश्रममंडलस्य पुष्णाति यः पूर्णगुणेन शोभां ॥

यत्राधिवासं रचयन्द्विजौघो निसर्गचित्रैर्नियमैर्मुनीनां ।
चिरंतनानां जगतिप्रतीतां सप्तत्वसंख्यां शिथिली करोति ॥

वीक्ष्यह्रियायत्रयुवाभिरूप्यं प्राणान्स्वयंपंचशरोमुमोच ।
भस्मीचकारेति तमीक्षणेन प्रवादमात्रं फलितंपुरारेः ॥

द्विजन्मनां यत्र दुरापपारां श्रियंसमालोक्यचिरायमाणां ।
अभूत्नवैब्राह्मण इत्यमोघमपि श्रुतेर्वाक्यमलंममार्ज ॥

यत्र विस्मयनीय पावनचरितापसारित पातकानां, पाषंडमत खंडनाय भूमंडलमवतरिष्यतो भगवतः परमेष्ठिनो मुख्यप्राणस्य परिचिचीर्षया प्रथममेवावतीर्णानामिव सत्यलोककुटुंबिनां महानुभावसुगृह मेधिनां विचारकृत्ता वेदवाक्येषु, शंकमानता शास्त्रपाठेषु, खंडता परम तेषु, निर्मर्यादता विद्यासु, निग्राहकता हृषीकेषु, बहुभाषिता वादेषु, भीरुकता पापेषु, हिंसकता यागपशुषु, लोलुपता हरिकथासु, विस्मृतता दुश्चरितेषु ॥

नाम्नांकयित्वा तं वंदे रामेणस्थापितं पुरा ।
वीक्ष्य विस्मयमानोऽसौ मुमुदे मुनिपुंगवः ॥

तदानीं वांछित सिद्धसाधनाय माधवाराधनां विधाय विविधाभिर्दक्षिणाभिर्विस्मापितमनसो ब्रह्मसदसो नेदिष्ठफलजुषामाशिषां कोटीःकोटीरयित्वा सविनयं विरचितानुचर्ययाभार्यया सह देवालयान्निष्क्रामन् संफुल्लमानसपरिपाको बल्लणसुमतिर्नातिदूरे विहाय निद्रा विहारमनुजिघृक्षया भगवंतं रंगदेवमिव दक्षिणदेशं समायांतं मस्तक तलविन्यस्तपुस्तकभारैस्तरुणप्रायैः शुचिभिर्धर्मैरिवाम्नायानामंतेवासिभिरनुगम्यमान मभिनवजांगलिकदललोहितेन विद्रुमविस्तारेणेव तेजोंबुराशे रुत्पातसंध्यारागेणेव संसार[†]स्य पल्लवपटेनेव तपश्चूतस्य, मृदुल मृदुलेन काषायवसनेन, बालातपमकालीनमिव प्रबलयंतं तरुण शिरीषकिंजिल्कमंजुताभंजनरुचा, विलसदपांगशोणिम चुंबिताग्रेण श्रवणवामलूरु

[† वासर]

समुत्पतितेनेव शतमखधनुरंकुरेण, कालकनीनिकामणिजंबूविभ्रमंसमा पतितेनेव तनुतरशुकशावकेन, किंचिदाकुंचितेन महनीयरहस्या-मिव मुक्तिपदवीमुपदिशताहरितपल्लस्तबकावतंसेनकवलितकर्णमूलंकवा टफलकविशालवक्षस्थलप्रेंखोलितयाप्रसृमरकलेवरदीप्तिकोकनदवाटसंदे-हादनुसरंत्येव मधुकरधोरणिकया, विश्वंभराध्युषितहृदयमंटपस्य वलभि-दुपलकल्पितयेव बहिर्मंगलतोरणमालिकया बहुलया तामरसबीजगुलि-कास्रजापरिष्क्रियमाणं वनसरसीविहरणस्कंधावसक्तबालकुवलयदामान-मिव कुंजरकुमारं कनकपिंगलगोपीचंदननिर्मितैः परिसरजागरूक पंच-मुद्रिकाविन्यासैः प्रांशुभिरूर्ध्वपुंड्रैः पवित्रीकृतसमुचितावयवं लंबमान मंजरीधुरंधरं चरिष्णुमिव सुमेरुतटराजच्छाखिनं, जर्झरीतिलककल्मा-षितेन समुच्छ्वसितपर्वणाषड्गुणितकौपीनमुद्राचमत्कृताग्रभागेन दुर्ज्ञा-नविपिनखंडनपरस्वधेनेव भवभुजंगविषापसारणवेत्रेण विरक्तिलतिको-पघ्नस्तंभेनेव दुष्कृतमदावलतोत्रेणेव मुष्टिविधृतेन तनीयसा दंडेन किंचि दासिंजितवामांसकूटंतित्रिणीसारशोधनमेदुरितथालथल्यं, स्वतेजसावि-निर्जित बंदीकृतमिव नवमरीचिमालिबिंबं, समुदग्रया नासिकया सोयमेव तत्र भगवतः कारुण्यभाजनमितीव पुरतस्सूचयंतं ताम्रकमं-डलुं पाणिना दक्षिणेन बिभ्राणं, पटीरदारुफलकघटितांचटकुचटकुरु-तेनसमाधिविजयानुकारिणीं चरणेन पादुकांस्पृशंतं, पावनपवनजपस्पंद मानाधरविवरविगलदमलदशनाभीशुनिचयेन चित्तनैर्मल्यप्रवाहमिवोद्वे-लयंतमतिप्रगल्भैरितस्ततोनयनविक्षेपैरंतर्गभीरिमाणमिव ज्ञापयंतं बद्ध मूर्तिमिव मध्वराद्धांतं, मूलकोशमिव महामंत्राणां, वै(कटि)§कमिव

§ क्रयि

वैष्णवाचाररत्नानां, खलीनमिव दुर्ललितेंद्रियघोटकानां, नीडमिव नियमशकुंतानां, चंक्रमणरंगमिव षड्दर्शनानां, विजयस्तंभमिव तत्वज्ञानस्य, ललितमिलिताकृतितत्तादृशवैभवं योगिनमेनमवलोक्य विस्मय कबलितहृदयो भक्तानुकंपिना व्यासदेवेन स्वप्नसमयानुगृहीतस्य महीयसोब्रह्मण्यशब्दस्यायमेवार्थ इति चेतसा निश्चिकाय ।

ततोसौ सरभसमुपसृत्य

साकंपादूं सरसिजदृशा संप्रणामे तदीयां ।
गौरीं कृत्वा निटिलतटिकागोपिकाचंदनेन ॥

पाणेःकुंडीं प्रचुरविनयः पावनीमादधानो ।
भक्त्यास्वीयं मुनिवरममुं प्रापयामास गेहं ॥

स तत्र हृषितहृषितमनाः तनुतरतरुणकर्बुरलोमसंदानितेन पारिजातकुसुमकेसरसुकुमारेण समवायेन पंचवर्णासारिसांगकुरंगीसह चरचर्मशेखरितेन परिणाहिना चित्ररल्लकेन संघटितायामंतर्मंटपवितर्दिकायां, विविधधातुशबलितप्रथमधरणीधराधित्यकायां प्रभातसमयेनेव बालमार्तांडमंडलं मंदमात्मना समुपवेश्य तमेनमर्घ्यादिकया प्रशस्यया परिवस्यया विकचोपचारभूयसा वचसा च शिष्यैस्सह मोदयामास ॥ कृतभिक्षंच परिगलितश्रांतिभरंचिरेण तदनुमत्या स्वयमपि निर्वर्तिताभ्यवहृतिरादरादासाद्य पुष्करितांजलिः पुंखानुपुंखसांद्रतरबाष्प गद्गदकंठः किंचिदाकुंचितपूर्वकायः प्रश्रयेण यतिपरिवृढमाबभाषे ॥ स्वामिन्नहमिदानीं कृतार्थीकृतोस्मि संदेशहरेणेव भाविभद्रस्य विवर्तनेनैव प्राक्तनसुकृतस्य कुंभीलकेनेव शोकस्य कुठारकेणेव कल्मषपादपस्य

प्रसादकेनेव वंशस्य सव्यवायकेनेवानंदबीजस्य धन्येतरदुरापेन महता तत्रभवतः समागमनेन माननीयेन ॥ तथापिदुर्लभतया महत्सन्निधानस्य, निरंकुशतया संमोदस्य,. चपलतया रसनायाः, समुंचिततया समयस्य कृपालुतया तत्र भवतः प्रियतमतया प्रश्नाभिधेयस्य तरलतयाचात्मनः, किंचिद्भवते विज्ञापयामि ॥

श्रीकाश्यपान्वयमणिर्मम तातपादः ।
श्रीरामदेव इति दीप्तयशःप्रभावः ॥

कस्यापि मस्करिपतेः करुणाविलासा ।
त्प्रासोष्ट षट्पटुधियः प्रथितान्कुमारान् ॥

तादृशेषु समनोविकासनिपुणेषु प्रथमानयशस्सुरभितेषु कनीयानृतुषु शिशिर इवाहमतिचिरमपुत्रतया वात्ययेव तृणभ्रमिः भ्राम्यमाणः प्रियतमयातया कंदलितोत्साहः पुनरपि श्रोत्रियसुतां कांचिदक्कम्माभिधांपर्यग्रहीषं ॥ तथाप्येतावंतं कालमनुन्मेषितकुलांकुरस्य वांछितोदयस्तत्रभवतः कारुण्यकणिकायत्ततमः ॥

इत्युक्तो यतिसंसदामधिपतिः पश्यन्प्रतीच्यादृशा ।
दंपत्योर्विहितावतार मनयो स्तत्तादृशं पौरुषं ॥

वाचा गाढतरार्थया परममित्यन्वग्रहीत्सादरं ।
भक्तप्रार्थनपूरणेष्वभिरतिं संतोहिसंतन्वते ॥

शिष्यैस्समं द्रुततरैरथदेवपेटी कुंडीबृसीवसनदंडलताग्रहैश्च ।
एवं प्रतोषितहृदा गृहमेधिनापि देवालयंप्रति गृहान्निरगात्सयोगी ॥

योगिनस्तस्यकरुणा कामिनीवीक्षणात्तदा ।
सकाण्वतिलकोधत्त भूरीन्पुलककुड्मलान् ॥

तावन्महात्मनस्तस्य तेजःपुंजं समीक्ष्य दुर्निरीक्षमगमदपर-वारिराशितटं ह्रीणह्रीणइव भगवानंशुमाली ।

मंदंमंदं संकुचितांचलास्तरुणचरणायुधशेखरश्रीजुषोविरहवि-क्लावानां सरोजिनीनां सद्यएव पुनरागमनाय सशपथंस्पृशंतइव शिरांसि व्यराजंतसरसीरुहेषु मिहिरकराः । अस्तंयाते दयिततमेभास्वति, पर मुखावलोकनकलुषकातराइव न्यमीलयन्पुटकिन्योनालीकनयनानि वि-योगशोकस्फुटित निलिंपधुनीपुलिनकोकमिथुनहृदयक्षरत्क्षतजप्रवाहेणेव संध्यारागेण रंजितमभूदंबरतलं । कामिनीजनमानापजिहीर्षया केली रमणधीवरविस्तार्यमाणेनेव मेचकगुणविरचितेन जालेन मंदंमंद-मापतता तमसा समजनिसमावृताजगती ॥ निस्सीमचारणपथसंचरण रयभरपरिश्रांतदिनकररथखरतुरगखुरखलीनखंडितलपनपरिगलितार्द्रफेन बिंदवो नभसिसमालक्ष्यत तारनिकराः । नकेनापिमानवता भवितव्य-मिति पुरंदरदिशि मदनमहीपतेरिव मणिविजयघंटिकासमुदजृंभत शिशिरकरमंडली ॥ एवं सति क्रमेण सकलामपिसायंतनीं नियम विधामशेषयित्वा परिणामपेशलशाल्मलीतूलतुंदिलतुंगदुकूलोपबर्हदृढ निहितकपोणिभागबंधुरदक्षिणेतरपाणिपल्लवतलसमर्पित कपोलमूलंमृदुल कृष्णसारचर्मपरिस्तृते धवलकंबलोदरे शयानेन सुखसंवाहनकुशल शिष्यजनोत्संगप्रसारितंचरणकिसलयेन प्रसंगेन पुण्यांविविधपुराणकथा-मभिहितवताभगवता तीर्थपादेन कानिचनसौवस्तिक स्वस्त्ययनसाध-नानि संविधेहिसाधयेति विहितानुमतिः काश्यपकुलमणिरुन्मस्तकां-जलिः प्रतिजगाम निजनिकेतनं ॥

यतीश्वरादीहितवस्तुलाभं श्रियासमं चिंतयतो रजन्यां ।
तल्पांतराले शयितस्यतस्य कल्पा इवासन् घटिकाविभागाः ॥

उत्तरेद्युरुदिते दिवाकरे सत्तमंसयतिनां कृतक्रियं ।
आनिनायशुचिरादरात्पुनः संचितोचितसमस्तसंविदं ॥

तत्रनवीननैष्ठिकीगोमयालेपन चित्रिते बहुप्रसूभिः मांगलिकाभिः विशारदैः पिष्टोपलचूर्णैः निर्व्यूढचतुरस्रप्रसाद धनलेखामनोहरमसृण-मसृणे महामंटपकुट्टिमे सरभसशिष्य जनसमर्पिते बृसीफलकेसमुपविष्टः तपोनिधिरखिलश्रुतिपारदृश्वभिरंतेवासिभिः स्वाहासहायंभगवंतं हुत-वहमाधाप्य हरितहरिताभिः मरकतमणिमयूखशलाकापरिणाहिनीभिः कुशमुष्टिभिः चमत्कृतपरिस्तरणालंकरणंजवनिकाभिर्वलयितामिव सुमेरु शिखरं शैवालमंजरीभिः परिवेष्टितमिव निबिडकोकनदवाटंवसलपट-लिकाभिः प्राकारितामिव पल्लवितसहकारं, पावनमूर्ति तं त्रिभवनप्र-तीक्ष्यं गोकर्णमात्राभिर्बहुविधाभिरग्रवतीभिस्समिद्भिश्च लाजशर्करादि मिश्रितैरार्द्रतिलैश्च बहुधा यथाविधि संप्रीणयामास ॥ तस्यसन्निधावेव प्रसादलक्षणैः प्रदक्षिणज्वालैः श्लाघमानस्येव हविर्माधुरींस्थालिकायां हव्यशेषं अयातयामं स्वयमेवादायत्रिधाविभक्तं चिरेणाभिमंत्रितं वधू सखस्य तस्यगृहमेधिनो हस्तेसमर्पयन् इत्थमभ्यधात् । एतदुपयोगा दूर्जस्वलायामरण्यामिव पावकानामचिरादेवभविष्यत्यपत्यानांत्रितयं ।

पुण्याय भूरियशसे तव पुष्कलायै भूत्यै सुदेवपुरुषस्य पुरातनस्य ।
तत्रोत्तरस्य तनयस्य च संप्रदानात्संप्रीणयिष्यसि मनोममसप्रियाकः ॥

इत्यभिहितमात्रएव मेधावी प्रसादसूचितानुमतिः प्रियतमवदन

मवलोक्य दुर्लंघंसंस्मरन् वचनं व्यासदेवस्य तत्तथेत्युदितवान् । वधू मिंथस्तानि हव्यकबलानि अभोजयत् ॥

सल्लकेरिव वने महावलः पल्लवानि मृदुलानि वाशितां ।
तत्र कंचिदतिवाह्यतापसः कालमस्यकरुणापयोनिधिः ॥

पूजनैः पुलकितस्ततो ययौ चन्नपट्टणमभिस्वमालयं ।
कालक्रमात्कलितदौहृदकंदलश्रीः स्साभीममध्वमुनिनामसमेधितौद्धौ ।
कन्यामसूत कमलामिव सिंधुवेला दंतावलेंद्रमिव दीप्ररुचंसुतंच ॥

इति श्रीसोमनाथकविविरचिते द्वितीयोल्लासः ॥

---

अधत्तपुण्यैरथगर्भमेषा पुष्यत्प्रभावं पुनरायताक्षी ।
स्फुरन्मणिंपुंड्रकवर्तिकेव कवेरिवोक्तिः कमनीयमर्थं ॥

उदरंगतवति भगवति गर्भछलेन परमेष्ठिनि मुख्यप्राणे देव देवे तदवकाशप्रकाशप्रकाशन सुकृतेनेव तादृशेन तस्यामध्यममपि महत्तामभजत ।

तदा [*] सिकानलिनपचोलिमदलसेवयेव मंदंमंदंमांसलितमभूत्कुचचक्रवाकयुगलं । तद्गंधवाताहूतेव मधुपमालानीलनीलाविरराज रोमराजिः । तन्मुखविहरणतुमुलकुतूहलशारदाकिरणनिकुरंबेणेवबहिः प्रसारिणा शनैश्शनैः धवला बभूव तनुलतिका । तदनुभावभारेणेव

[* सर]

समुदग्रेण नाक्षमेतां पदात्पदमपिचलितुं किसलयपेशलौ चरणौतत्प्रवि-चिक्षिषयेव समुद्वेलयासमजनि तरलतरला नयनयुगली । तदलंकारवर-धारणविलोकनविलज्जितानीव विरलतांयातानि भूषणानिततःपरिण-तेस्समये ।

सुतमजनयदेपा शुद्धताभाजिलग्ने ग्रहगणशुभवीक्षा गौरवोद्दामभाग्ये ।
विधिमिव निरपायं विश्ववाचां निदानं नरकदनुजहंतुर्नाभिनालीकपाली ॥

अभादभीशुप्रकरैरयं शिशुः सुमेरुकुंजीकृतसूतिकागृहैः ।
अभूतपूर्वैरमलैरिवात्मनो हिरण्यगर्भत्वमिव प्रदर्शयन् ॥

तदा दिशामुखैस्साकं प्रसन्नतामभजंतमनांसि । मंगल शंखध्वा-नेनसह समुदजृंभंत प्रीतयोबांधवानां । अमरतरुप्रसूनवृष्टिभिस्सार्धं सम वर्तंत मातुरानंदबाष्पसलिलानि । समीरशावकैस्समं काश्यपकुलाधिपः सुस्पर्शनस्सकलजनानानंदयामास ।

कनकांबुजकंदलोपमानं मुखमालोकयतस्सुतस्यतस्य ।
नयनात्पितुरश्रुवारिपूरो निरगादंतरवानिव प्रमोदः ॥

सशिशुर्निसर्गमधुराकृतिः यथाविधि जनकविहितया जात-क्रियया, दिनमणिरिव जृंभमाणया, दिवसमुखश्रिया, पावक इव पवित्र-या हविराहुत्या, चंद्रमाइवासन्नया शरदा, सहकार इव संप्राप्तया वसंत-संपदा, स्वाध्याय इव सुशिक्षया समावृत्या केशवोत्संगइवारूढया कलशाब्धिकन्यया, सद्यएव कमपि रामणीयकविशेषमुदशेषयत् ।

भवितैष यतीशितेतिनूनं परमार्थेन विजानतेव बालः ।
गुरुणासगुरोर्मुदं ददत्या यतिराजाभिधया प्रसादितोभूत् ॥

क्रमेण सकुमारकोजन्मांतरानुवर्तिनीभिरिव निजासनकमलोदरदृढलग्नवराटिका पिंगलिमछटाभिर्वपुरालोकमंजरीभिर्विमानोदरमिव शय्यासदनमादधानः, शमधनजनइव निविष्टतरुणतरणिमंडलसौभाग्यावतारइव, चंपककलिकानां शोधनोपलइव ज्वलनज्वालानां अपहासकइव, तटिल्लतानां औरसकुमारइव सुमेरुसुषुमायास्सारइव पीतवर्णस्य विविध कनकरक्षागुलिकामालिकाभिरतिकुटिलतरक्षुनखरमणीय मंजुल मध्यभागाभिः कोरकितकंठमूलः, मुहुर्मुहुरास्वादनकेलिमृदुलतरस्य चरणांगुष्टस्य, वादकोलाहलपराजितविमतसुमतिजनोपचरणीयदृढचरण विधिसहिष्णुतामिवाभ्यासयन्नुत्तानतलेन पादारविंदद्वयेन मणिगण तुंगसमस्तराजमकुटकोटिसन्यासपरिपाटीमिव भाविनीं विवृण्वन्पाणि तामर†दलायमानांगुष्टग्रसनविहारेण भवित्रीमिवात्मनः परमहंसतांप्रकट यन् , सरासिजमुकुलाकारायमाणदृढमुष्टिकया करगृहीतामिवतत्वराद्धांतं सूचयन् आकस्मिकेन घनाघनगर्जितेनेव गंभीरेण रोदनध्वनिनाखांड निकपाषंडमंडलमिव संतर्जयन् , चंद्रिकाधवलकौशेयवितानकलितमरकत मणिशृंखलिकांचललंबिनं, विरहास‡नतया समागत्य सेव्यमानंश्याम-लनालकोमलं विकचनिजासिकाकोकनदमिव, पद्मरागमणिकंदुकम-वलोकमवलोकंदरहसितमंकुरयन् पर्यंकिकाशयनकुतूहलप्रायां ललित ललितां काममपिदशामत्यवीवहत्

अंकादंकं संचरन्नर्भकोसौ तत्ताद्दक्षः प्राहसल्लीलयैव ।
पश्चात्पश्चं पर्यटंतंसरालं राशेराशिं रंजयंतंविधुंच ॥

---

† स ‡ ह

लाल्येन द्विपमृगराजशावकाभ्यां मंदेनाजिरभुवि जानुचंक्रमेण ।
पर्यंतप्रसृतनिजप्रभासरस्या मभ्यस्य प्लवनमिव व्यराजतासौ ॥

वाणी यशोंकुरसखी महनीयशोभातस्यानने सममदृश्यत दंतराजिः ।
बिंबे विधोरिव सुधारसबिंदुरेखापङ्क्तिस्सरोजइव भासुरमौक्तिकानां ॥

बोद्धुमात्ममहिमानमुदारं नक्षमाक्षितिरितीवसगाढं ।
अंगुलींसमवलंब्यजनन्याव्यातनिष्ट मृदुचंक्रमभंगीं ॥

लीलासु यावदुदितं प्रथमं पितृभ्यां वक्तुं बहूनि निपुणोपि सतावदेव ।
पश्चाद्भाषत निरंकुशकीर्तिमिछन् बाल्येपि तद्वचनपालनलीलयेव ॥

तौ दंपती धन्यतमाग्रगण्यौ सुतोसिनौ कस्यवदेति पृष्टात् ।
एकस्य निर्देशमवेक्ष्य पुत्रादानंदगर्भं हसितंव्यधातां ॥

चरंतमिंदुं नभसिक्षपासु प्रगृह्यदेहीत्यवदत्सवित्रीं ।
स भूयसा कीर्तिसुधाकराणां तं मातृकीकृत्य सिसृक्षयेव ॥

इत्थमतिवाहितद्विहायनो गुरुणाविधिवदनुष्ठितचूडाविधानो यतिराजः पंचमेवयसि चलाचलशिखंडकैर्बांधवकुमारैस्सवयोभिरनवद्या मतिहृद्यतमां लिपिविद्यां परिचितुमारभत ॥ तत्र

प्रमोदभारात्परितस्समुत्थितै रजोभिरंगैरमणाभिधाक्षरं ।
वकारमादौ लिखितस्त तच्छिशोस्समालिलिंगेवतनुंवसुंधरा ॥

ॐकाररूपं लिखितंचतेन भूमौ स्वकीयागमसूचनार्थै ।
विरिंचिपत्न्याप्रहितेनचर्चा चकारतालछदवेष्टनेन ॥

श्रीमदष्टाक्षरीनाम्नो मंत्रस्य समहीयसः ।
अंतरंगतयास्पृष्ट्वा नकारमलिखत्परं ॥

अच्युतोस्य लिपिदैवतमग्रे श्रृंगमेवमृदु विष्टरमासीत् ।
भद्रकुंभपरिपाटिमवर्णं पादएव परमाक्षतपात्रं ॥

उपघ्नशाखीकृतमानसेन नवोद्गमाया धिषणालतायाः ।
विचित्रितस्तेन करेणरेफोविद्यागमद्वारधियं व्यधत्त ॥

बालेन तेन नवहल्लकपत्रभासा व्याकुंचितांगुलिकया विहितोयकारः ।
चक्रेवदान्यमणिरेष इति प्रबुध्या क्षोणीप्रसारितकरोदरयुग्मशंकां ॥

विनिर्मितस्तेन विशेषरागात्सरोजुषः पुष्करभूपुरंध्र्याः ।
अलाबुकूटत्रयहारिशोभां वीणेतिशंकां विदधे णकारः ॥

प्रच्युतानि वदनात्पटुलालावार्पृषंत्युरसितस्यविरेजुः ।
बिंबितानि पुनरच्छतनुत्वादक्षराणि मनसेव धृतानि ॥

एवं कतिपयैर्वासरैर्यथातथं गृहीताशेषलिपिविशेषेण, नगरमिव तोरणेन, यशइव वितरणेन, पुण्यमिव सत्कर्मणा, प्रमोदमिव महोत्सवेन, सौधमिव सोपानेन, विजयमिव वीर्येण, समयोचितमखिलमपि वर्णसमुदायमलंचकार ॥ सप्तमेवयसि गुरुणाविधिवदुपनीतः तपसादुश्चरेण लब्धमिव निरपायनिलयः ब्रह्मवर्चसस्सनिर्गत्य निकेतनान्नियमद्वितीय एव शुकइव नीडानिगुरुकुलान्यध्यवात्सीत् ॥ प्रथमं कुलगृहमिति स्वातंत्र्येण रुचिरपदक्रमैः प्रविश्य तस्मिन् सुखविलासजुषि ततोमहेर्ष्ययापातिभिरिव दायप्राप्त्यै कलहायमानैरितरेतरैरुपनिषत्कुटुंबिनीभिस्सममचिरादयमाक्रम्यत ॥ केवलं सविधिरतिचिरमनूचानानसेवत गुरून् ॥ नाभ्यासापेक्षया लोकाचार इति व्यधायितेन मुहुरधीतावृत्तिः । नप्रमादभिया । पुरातनत्वगौरवादवततारशिक्षादिष्वस्य शेमुषी । नलक्षणाभिक्षतया । मधुरतरस्वरोच्चारणशुश्रूषया जनास्तत्र तमप्राक्षुः । नपरीक्षितया । एवमुषित्वा हायनानि चत्वारि गुरुकुलेषु समेधमाननिरतिशयमेधाप्राशस्त्यकबलित दिगंतरालः स यतिराजो-

भक्त्या विनयेन सपर्यया दक्षिणाभिश्च समावर्जितमानसैर्गुरुभिः कुटुं-
बिनीसहायैः प्रास्थानिकप्रणतिविधानाद्विरहासहिष्णुतया निर्गलंतीभि-
र्बाष्पसलिलधाराभिः स्नपितशिखंडकः, कथंकथंचिदासादितानुमतिः
कृच्छ्रेण मनस्स्वकीयमप्याकृष्य केनापिपश्चादाकृष्यमाणाभ्यामिव चरणा-
भ्यां मातापितृचरणकिसलयसंदर्शनजनितकुतूहलेन शनैश्शनैरभजत
निजनिवासं ॥ तत्र प्रथममंगैरष्टभिरालीढवसुधातलेन भूरिणासंप्रणाम
विधिना चिरोत्कंठितमनसा संमोदबाष्पधारालवदनौ दृढतराश्लेषाभि-
लाषपुनः प्रसारितभुजौ मातापितरौ प्रकटोच्चारितशर्मणा सप्रश्रयपद
स्पर्शनेन, निकाममहोत्सवगुणाकृष्टानिवसरभससमागतान् बंधुजनांश्च
गाढया परिरंभणक्रियया, त्वरितगतिसंभ्रमादतिप्रणामनिश्वासान् सदय
सत्सुहृदश्च वत्स सविधमेह्येहीति मधुरिमपुषा लालनालापेन, चिरम-
दृष्टतया तरलतरैर्विलोकनैरवलोकयतोमाणवकांश्च यथाक्रमं संभाव्य,
ततस्तैरादरेण पृच्छ्यमाणो निजप्रवासोदंतं निरवशेषमकथयत् । ततः
परमपि तत्रैव सकूलंकषेण विद्याविशेषाभिलाषेण बहुश्रुत्या परिणत
रसिकभावभाजां लालाजलायितव्याकरणफणितीनां सकाशाद्विपश्चितां
अपाठीत्सालंकाराणि सनाटकानि काव्यानि ॥ तत्रांतरे श्रुत-
निखिलवृत्तांतेन तत्रभवता गुरुणा यथार्थनाम्ना ब्रह्मण्ययोगिना स्व-
प्रतिबिंब इव प्रेषितःकश्चिदग्रणीरंतेवासिनां प्रथमोपायइव भाविताव-
तारस्य, व्यवसायइव कार्यसिद्धेः, प्रभावइव घटनाया, यशोराशिरिव
लालित्यस्य, शावकइव वैधग्धस्य, महापुरुषो, दशरथमिव गाधेयो,
बल्लणसुमतिमाससाद ॥ सरभसविहित सपर्याविधये तादृशमस्मै-
गुरुवचनमवोचत् ॥ अपिभवान्कुटुंबिन्यासह मंगलेन वर्धते ॥ ननु

कल्याणी विशेषेणजननीवात्सल्यभाजनं कुमारिका ॥ भद्रेण कश्चित्कुलधुरंधरस्समेधतेज्यायान् । कुशलीकिमितरः कुमार इति ॥ ततश्च राज§परिणाह धवलतनुतरोष्णीषांचलादामुच्य साक्षादाहृतचक्रमिव गुरोःपत्रंप्रादात् । असावपि तत्सविनयमंजलिना गृहीत्वा नयनस्पर्श पूर्वं शिरसि निधाय स्वयमेव वाचयित्वा मोहेन स्तब्धमनाः लिखित इवासीत् ॥ क्षणादेव पुनरवलंबितधैर्यलेशो वर्धिष्णुनासह सागरेणेव मेधाविना सद्यएव संधानिर्वहणजागरूकेण भवितव्यमित्येतावंतं गुरुलेखाराद्धांतं रहसिगृहिण्यैन्यवेदयत् ॥

> दृष्ट्वा सुतं चिरतपःपरिणाहलब्धं विद्याभिरूप्यविनयादिगुणैककोशं ।
> स्मृत्वा मुनेर्वचनमप्यविलंघनीयं डोलायमानहृदया जननी बभूव ॥

अन्येद्युरुदिते युगप्रमाणं भगवति भास्वत्यलंध्यतया व्यासदेव शासनस्य झटितिनिर्वहणीयतया प्रस्तुतकार्यस्य विनयपर्यायतया तनयस्य जाल्मतरतया चात्मनोजाययासह कृतनिश्चयस्तं पुरोधाय गुरुशिष्यं विदितवृत्तांतेन साकंकुमारयतिराजेन स मंदंमंदं तत्रभवतो महामुनेरभ्याशमगात् ॥ तत्र प्रथमं स शिष्यः प्रणिपत्य गुरवे प्रांजलिर्न्यवेदयत् ॥ स्वामिन्भगवतः करुणापरिणामेन कुमारेणसह काश्यपवंश्यस्समागत्य द्वारमध्यास्तइति ॥ सोब्रवीद्द्रुतं त्वरितंप्रवेशयेति ॥ अथ तेन समानीयमानं शरद्विकचकाशप्रकाशया ललितनिर्विशेषया सुकुमारोष्णीषकयाद्राघीयस्याबंधुरित मस्तकेन, कुसुमितशेखरेणेव कुंदमहीरुहेण, विमलविमलया दुकूलसंव्यानशाटिकया दृक्पथलेखयेव, गगना

§ त्

भोगेन सनाथीकृते, विधृताप्रपदीनविशदकंचुकेन कुसुंभरागनिर्णि-क्तया मर्मरमुचा,प्रछदपटिकया विहगरुतमुखरया गैरिकततिभुवेव तुषार गिरिशिखरेण परिकलितमध्येन प्रांशुना महापुरुषलक्षणपक्ष्मलितेन जनकेन परिष्कृतपुरःप्रदेशं, अच्छाच्छानामंगुलिकावलिमालतीमुकुलावतंसायमानानां पदनखरमणीनां प्रसृमरमयूखरेखाव्याजेनांगुष्ठमात्र निष्ठ्यूतैकसुरसरिद्वर्णिनोवामनस्य निकाममतिशिशयिषया बहीरवतार यंतमिव भागीरथीश्चिरवियुक्ततया समागत्य गाढंप्रणमतेव प्राक्तनजन्म गुणेन, स्पष्टीभवतेव सकलतीर्थानुरागेण, समुदंचतेव लेखाकमलमरीचि जालेन, कुलोपाध्यायेनेव विद्रुमलताकिसलयानां,सवयसेवयावकरसस्य, कर्णेजपेनेव कुरविंदसौभाग्यस्य, चरणतलशोणिम्ना, पद्मरागमणिमयी-मिव पदवीं वितन्वानं तिलकेनेवांघ्रिसुषुमायास्तुलाफलकेनेव कल-भगतिसौभाग्यस्य, दरबुद्बुदेनेव लावण्यसरसः सदसद्विकल्पगोचरेण श्लक्ष्णतमेन गुल्फयुगलेन सकलमहीपालप्रतीक्ष्यतां प्रथयंतं, शाणोल्लि-खितेनेव वृत्तानतमध्यभागेन नटनस्तंभेनेव मंदगतिलासिकायाः जंघाद्वितयेन पुष्टस्मरतूणीरस्य पूर्णावतारमिव पुंखयंतं, प्रचंडतरचारु-तामंडितोरुकांडेनाखंडलवेतंडशुंडादंडस्य पुनर्जननचर्चामिवोद्दामयंतं पिशंगस्य संध्यापयोदशंकया समालिंगितस्येव सौदामनीदाम्नो, नाभी कुहरविनिर्गतस्येव गर्भस्थितहिरण्यदीधितिवलयस्य, जन्मान्तरविलग्न-स्येव त्रिपावकीसौहार्दगुणस्य, त्रिगुणितस्य मौंजीकलापस्य,भासापरितः समुल्लसंत्या, भगवंतं पीतांबरमिव विडंबयंतं, सिंदूरधूसरितवपुषं, कनक शृंखलासंदानितोदरमिव स्तंबेरमशावकं, मौक्तिकगभस्तिरचितयेव मनोरमया साक्षात्समासक्तयेव धातृकुटुंबिनीनिर्मलमनःप्रवृत्यामृणा-

लिकापरिवेष्टितमिव कोकयुवानं, लाजावल्यावेल्लितमिव जातवेदसं, रजनीरमणकलयांचितमिव दर्शमार्तांडं, त्रिपथगया परिवेष्टितमिव हाटकगिरिकूटं, यज्ञसूत्रिकया परिपूतवक्षोभागं कठोरशशिलांछनतापिंछपिंछवांछनीयच्छविना सुकुमारलोमसंतानेन, कलिंदकन्यातरंगेणेव सरस्वतीप्रवाहं, द्विरेफपोतचक्रेणेव सायंतनौषधिशाखिनं, कृष्णाजिनपटेन शबलीकृतकलेबरं, अकुटिलात्मप्रमाणपरिणाहाग्रावलंबिधवलकौपीनं ब्रह्मचर्यविजयध्वजमिवाषाढं पाणिना सव्येन धारयंतं, परिणाममेचकाकारेण प्रथमाश्रमनिष्ठाया इव विभ्रमकुवलयकंदुकेन, सरसीरुहशंकयानुसरतेव कादंबपोतेन, नारिकेलकमंडलुनाध्यासितदक्षिणपाणिकमलं, स्वबिरुददरश्रृंखलसूत्रिकाभिरिव मेखलाभिस्तिसृभिर्बंधुरेण स्वयमेव घुमघुमारवप्रपंचनापठनापरतंत्रनिध्वानोद्धतस्य पांचजन्यस्य मदसंचयमिव लुंपता,कंठकंबुना परिशोभमानं, यदृच्छयाविवृताधरपुटनिस्तृतैरसनांचलसंचरण चुंचुविधापदनखांशुभिरिव रदनकिरणैःक्षपाकरकलासहस्रमिव कंदलयंतं, कालिंदीतरंगमदखंडनिकयोर्निरंकुशनटनविलास चटुलचरणस्पुटितयोश्शारदामहेंद्रमणिनूपुरखंडयोः प्रफुल्लशाखयोरिव नासावंशस्य नीलवितानशाटिकयोरिव विलोचनस्य मधुकरवीथिकयोरिव वदनराजीवस्य कुटिलकोटिकयोर्भ्रूलतयोः प्रसर्पणजुषारोचिषा दिशिदिशि कुसुमशरकोदंडकोशनिवेशानिव प्रकाशयंतं तप्तजांबूनदसगर्भेण गोपीचंदनरसेन विहितैः तेजःप्रभापराजितानां प्रद्योतनानामंशैरिव प्रेषितैः द्वादशाभिरूर्ध्वपुंड्रैरुपास्यमानसमुचितावयवं, दंडमात्रेण चिरमज्जनलग्नेनेव तीर्थशैवलेन धूमप्ररोहेणेव (नय)*स्तनू

---

*तेज

नपातो, वालेनेवब्रह्मवर्चसचमरस्य कंपप्रायेण शिखंडकेन शेखरितं कल्प-प्रवालकौशेयकपरिवीतं त्रिलोचनविजिगीषया तपस्तपंतमिव कंदर्पं इयद्भावमिव रामणीयकस्य वास्तुमिव महालक्षणानामग्रभूमिमिव नयन सुकृतपरिणतेरर्थमिवाश्चर्यशब्दस्य प्रमाणमिव गांभीर्यस्य दृष्टांतमिव आदिमाश्रमस्य निर्णयमिव ब्राह्मण्यस्यात्मानमिव विनयस्य शनैश्शनै-रुपसर्पंतमेनं वर्णिनं निर्वर्ण्यविस्मितेन कबलितहृदयश्चिरादात्मानं सिद्धसंकल्पममन्यत ॥

उपसृत्य ततस्सुतेन साकं शतकृत्वः प्रणिपत्यसंनिषण्णं ।
गुरुरेनमवेक्ष्य कौतुकेन प्रकटार्थाप्रमितामवोचदुक्तिं ॥

अयिभद्रपुराबभूवुस्त्रैशंकवादयोमहापुरुषाः सत्यसंधाः

अपितेषु महानुभावभाक्षु स्वयशःपूरवलक्षसर्वदिक्षु ।
स्वयमेव वितीर्णसंविदब्धिं कमपित्वामिव नावलोकयामः ॥

इत्यादिवचसानुगृहीत सचेतातत्करुणापूरमयमात्मजं कालमे-घोमहांतं सरित्प्रवाहामिव सागरेण गुरुणा तेन संयोज्य त्रिचतुरवासरा-नंतरं स्वधामप्रतिययौ ॥ ततः परं पितृजननिर्विशेषमुपलालयन् समुनि-रस्य वटोराबाल्यप्रायामकुतोरोधां मेधां अनविद्यां विद्यामव्याहतांवा-वदूकतां अपामरमाचारमनामयं विनयमविकारमाकारमवार्यं धैर्यमति-प्रमाणं गंभीरिमाणं महाराज(पु)†रिपूजनसूचनाविचक्षणं लक्षणमप्यसकृ-दालोक्यतमेनं जगतिपाषंडबुर्बुरषंडकंटकितानामुन्मेषणाय वैदिका-चारपदवीनामाश्रमं तुरीयं संक्रमयितुममंस्त । तावदसौकुमारोयतिराजो

† प

निर्मलनिजनैपुणीविशेषमणिमुकुरप्रतिफलितं तथाविधं तस्यभावं निधाय शैशवचापलेन चिंतासंतानसहायस्ततो मंदमंदमविदितएव मध्यंदिने पित्रोः सकाशं प्रतिप्रस्थितः

मध्येमार्गं वनशिखिसमानातपैः क्रांतकांतिः ।
पायंपायं सरसिसरसि प्रौढयोदन्ययांभः ॥

शाखाजातैः कबलितदिशः कस्यचिन्मूलमागान् ।
न्यग्रोधद्रोस्सतुसिकतिलं श्रांतिनिर्वापणाय ॥

तंशनैः प्रत्यभिज्ञार्थै तत्रनिद्रातनीयसी ।
आदर्शमिवनैर्मल्यसिद्ध्येभूतिराविशत् ॥

तत्क्षणे वटपत्रपुटादिव गगनपथादवतीर्णेन सुपर्णोपवाह्याधिरूढेन कोटीरकोटिघटितांजलिनिलिंपमुनिनिवहस्तूयमानमहिम्ना, पार्श्वेप्रवर्त्यमाननानागीतिश्लाघाकंपमानमकुटाग्रेण भगवतालक्ष्मीसहायेन बोधितनिजावतारकरणीयः निद्रासंगमविहारस्वेदैरिव हर्षाश्रुवारिशीकरैः कोरकितविलोचनो विस्मयपुलकितचेतास्तरसाप्राबुध्यत ।

उत्थायशीघ्रमुररीकृतभिक्षुभावः
संमृज्यनेत्रयुगलीं सलिलेनकुंड्याः ।
आभ्यागमत्सविनयेन गुरोस्सकाशं
कार्यांतरादिव विनिर्गतएवभूयः ॥

तदनुगणरात्रमतिवाह्यगुरोः प्रत्ययं प्रसंगादिनाश्रमतारतम्यंविवृण्वतः सानुनयः वाचाशिष्यभावं याचमानस्य मनोरथपूरणाय भुवनमंगलाय च बहुगुणपण्यवीथ्यांतिथ्यां क्षेमंकरभासुरेवासरे अपाकरणावतारे तारे,स्थास्नुतालग्नेलग्ने प्रभाते प्रभाकरइव पावकाज्जोतिष्कालापं

तस्मात्तपसाजाज्वल्यमानात् द्रुहिणकेतनपटमिव परमहंसलक्षणोदारं यथाविधि चतुर्थाश्रमं पर्यग्रहीत् ॥ तेन विधिनाशाणोल्लेखिनेरत्नायेव सद्यएवऊर्जस्वलाय प्रकटशंखचक्रलांछनाय तस्मैतापसाय महेयीचर्वितैः पुनरुद्धृत्य शोधितैः नीवाररूपैश्चिरेणादधानाय शरीरयात्रामावृत्तिभिरगणेयाभिः फलोन्मुखेन महीयसा केनापिमंत्रेण सह कौस्तुभेन कमलामिव नारायणाय पारावारोमहतीं व्यसाभिधां प्रादात् ॥

इति श्रीसोमनाथकविविरचिते तृतीयोल्लासः

---

अथ तस्य गुरूपकंठभाजो विशदा व्यासयतीश्वरस्य कीर्तिः ।
तरसाभिययौ दिगंतभूमिं कलशांभोनिधिनिर्जिगीषयेव ॥

क्रमेण सनिसर्गगभीरचेतास्तुंगतरशृंगालिंगितपयोधरान्धराधराननोकहनिवहविकसितकुसुममधुधारासंपातदामितदावदहनानि वनानि मदकलकलहंससंसदा लोलितनलिनगलितपरिमलपरि (मले)‡न सललित व्यलीकमेदस्विनीस्रोतस्विनीश्चातिशयनृत्तकलामत्तकाशिनीमंजीरझंझलितमुखरितसौधशिखराणि नगराणि आश्चर्यतपश्चर्यादीप्रमणिपेटिकामठिकाश्च विलंघ्य निरंतरनिषेव्यमाणानेकदशशतमुख फणितिमधुरिमाधरीकृतसुधैर्बुधैः प्रतिभटघटाडंबरजंबालरविभिः कविभिः प्रकटितत्रिदशभुवनप्रत्यादेशं देशमगाहिष्ट ॥

---

‡ मल

सुरकरनलिनानां धोरणी चंद्रभासां कलशजलधिकन्याकामपूजाफलश्रीः ।
मरकतमणिसानौ वारणाधीश्वराद्रेः प्रविकसति विधातुः प्राक्तनी पुण्यमुद्रा ॥

अपिच

सांम्राज्यं पवनाशिनामधितुलाकोटिस्फुटं कल्पयन् ।
कुर्वन्मूर्ध्नि कुमुद्वतीपरिषदामानंदघोरंकुरं ॥

वामेनादिधनुर्धरस्य मधुरामाज्ञां समाराधयन् ।
भूमौ कोपि रसालमूलरसिकः पुष्णाति मोदं दृशोः ॥

तत्र पर्यटंतं समीक्ष्य तं वैज्ञानिकं सुलभाय यशसे स्वयमेवाहूय पालयतां पुंखानुपुंखतदीयवाचो विस्मापितानामपि विपश्चितां चेतांसि प्रायेण मस्करी किं सुरगुरुरपि वा तादृश इत्यकथयन् ॥

प्रापाश्रमादेष तुरीयमाद्यादतीवतद्धि स्वयमप्युदग्रान् ।
गुणानुपेत्य श्रवणाभिधानान्मध्यस्थितानुत्तरमाललंबे ॥

मान्यस्य तस्य महतो महतां सकाशे षड्दर्शनान्यपिधराधरसन्निभानि ।
विद्याबुभुक्षिलवतो धिषणामहिम्नो प्राणादिमाहुतिदशां प्रथमं प्रजग्मुः ॥

इत्थमचिरादेवाधिगतसमस्तविद्याय सततं विवादयिषयास्फुरता दशनवाससा तर्जनइव शारदावाचारभटमपि तस्मै महायोगिने जातुचित्तेजोविशेषमसहिष्णुना केनापि ब्रह्मबंधुना धार्तराष्ट्रेणेव दुरात्मना भीमसेनाय गरलं कबलगोपितं प्रायुङ्क्त ॥ अरुंतुदेन तेन तस्य तनुश्शरदीवशैवलिनी बाहुलीव शशिमंडली शैशिरीव सहकारलता दिनेदिने सुषुमैकशेषं तनिमानमभजत ॥ तावत्सभक्तवत्सलेन करुणावशंवदेन भगवता गरुडध्वजेन स्वप्ननिर्दिष्टायास्साक्षादिव धन्वंतरीकुलदेवतायाः कस्याश्चिन्महौषधिमूलिकायास्सद्यस्तनेनेव योगेन

प्रत्यासन्नरूपयामूर्त्या ग्राहमुक्तइव गजयूथनाथः पूर्वादप्यधिकमशोभत ॥

[§] भूरिपु दिनेषु यतिप्रवेकस्तेजः प्रणम्य वरदं द्विपशैलचिह्नं ।
देशान्पदर्शीति विचित्रवचःप्रभावस्तस्मात्समुल्वनगरीं शनकैरयासीत् ॥

तत्र सततविहिताधिवासं सनकमिव महर्षिभिर्ब्रह्मवादिभि रंतेवासिभिरुपास्यमानं प्रतिविबुधविटपिपाटनक्रीडनकठोरकुठारधारायमाणवाग्गुंभं हरिदंतरविसर्पियशःकाशवनप्रवर्तितशाश्वतशरत्समयावतारं निक्षेपभाजनमिव मध्वमुनिरहस्यस्य साक्षात्कारमिव धैर्यस्य बिरुदपद्यमिव सद्गुणग्रामस्यालानमिव गांभीर्यमदावलस्य महात्मानं सकृदाकर्णितनिजागमनप्रसंगपुलकितमानसं लक्ष्मीनारायणयोगिनमासाद्यभक्त्या प्राणंसीत् ॥

एनंसदृष्ट्वायतिसार्वभौमं तेजोभरं दीपिताद्दिग्विभागं ।
स्वाहांचिराद्गाढतरस्वकांत वियोगबाधाविषयं शशंके ॥

अस्मै ततो व्यासमुनीश्वराय जाज्वल्यमानाय तपःप्रभावैः ।
शिष्योपनीतै स्सकुशासनाद्यै र्यथोचितं सत्कृतिमाततान ॥

इत्थंकारं प्रकाशितादरप्रधिष्णुस्तस्य (चिर)*स्तेजोगौरवं संपादयिष्यन्नमोहजुषां विदुषां गवेषणीयमशेषेण तस्मात्त्रयीशिखरतत्वरहस्यमसा(ही)†त् ॥ सच प्रशस्ततयादेशस्य पवित्रतयामहातीर्थानां भूयिष्ठतयामहत्संघस्य वत्सलतयाविद्यागुरोः प्रशांततयामनसश्च समग्रसन्निधानवैभवस्य भगवतो नृसिंहस्य कांक्षमाणः करुणां भूयसीं शरत्समयइव प्रसन्नसलिलाशयः समरइवारब्धवीरासनो रथइव

§ यातेषु   * यश   † त्सी

विधृताक्षमालो, वनोद्देशइव प्रविकस्वरजपो धिषणइव नियमितमरुद्गणः तरुरिव दरदरीदृश्यमाननेत्रभागः निवृष्टबलाहकइवाचंचलस्तपस्तपन्महनीयं तत्रैव चिरमवसत् ॥

तं दिव्यपूरुषममुं प्रविबुध्यमानस्तेजोभरेण तपसा च धिया महिम्ना ।
विद्यागुरुस्समयविप्रमुखः कदाचित्प्रोवाच वाचमुचितां भुवनोत्सवाय ॥

अये जगति विजयते केवलं शारदायामेव हृद्या निखिलविद्या ॥ भार्गवएव प्रतिभटप्रतिभयाप्रतिभा धिषणएवाप्रतिहतमेदुरमदावदावदता, विकर्तनएव विस्मापिततेजःप्रपंच स्सुधाकरएव सकलजनमनःप्रीणननैपुणं, विभावसावेव विश्वासितलोकबुद्धिशुद्धिर्मेदिनीधराधिपशृंगएव विशेषधौरंधर्यं मंदारमहीरुहएवानन्यसामान्यावदान्यता भगवति वासुदेवएव विचित्राणि चरित्राणि ॥

अभूतपूर्वाभ्युदये त्रिलोकीपटीकुटी[‡]भवदुच्चकीर्तै ।
समस्तमेतत्तु समेधमानं त्वय्येकवास्तव्यतयासमिंधे ॥

अतोदिनविरामेणेव खलजनवयोव्यामोहचूर्णेन सरोजिन्याइव चिरेणानिद्राणायाः वैदिकाचारमंद्रायाः दिनकरइव भवान् प्रतिबोधनकार्मठी भवति । तत्र सर्वेषामपि धर्माणां राजा सेतुरिति न्यायेन भवता सर्वदा तदातदास्थानीस्थेयुषा भवितव्यं ॥ पुराकिल योगिनो निस्संगा अपि महांतो दत्तात्रेयादयः जगदुपकरणाय राजन्यसभालंकारा भभूवुः ॥

इत्युक्तवंतमथ तं स तथेति वाचा तुष्टं विधाय नरसिंहनवीनगुरुस्तं ।
शिष्यैस्समं कतिपयै स्सुभि स्सशीव संप्रस्थितः प्रति महाचलराजधानीं ॥

---

‡ [बो]

मार्गं विलंघितवतः क्रमशो महांतं मध्येदिनं वनतरुप्रकटोपगूढं ।
अग्रेसरस्य यतिनाममलांबुगर्भमग्रेसरो नयनयोरतिथी बभूव ॥

स्नात्वा स तत्र सलिले शिशिरीभवद्भि र्भानोरगोचरतया परितः कराणां ।
देवार्चनामकृत शिष्यजनाहृताभिः कल्हारतामरसकैरवमंजरीभिः ॥

तावदस्य सरसस्समीपतो दक्षिणाद्विपिनवृक्षमंडलात् ।
रोदसीकबलयन्निवोदगात्कोपि(क्रोड)§निकरो भयानकः ॥

तमाकर्ण्य तस्य चेतः किमिदमिति चिंतां यावदालंबे । तावदेव कौचन ब्रह्मदंपती दावपावकालीढबालसहकारस्येव विवर्णभाजो विस्रंसितावयवसंधिबंधस्य बाहूपपीठमाश्लिष्य धार्यमाणस्य द्वादशवार्षीयस्य कुमारस्य वदनं वीक्ष्यवीक्ष्य करुणं विलपंतौ शनैश्शनैस्सविधभुवमासेदतुः

अन्यस्य तस्य सरसो महति प्रतीरे विन्यस्य तं तनुभवं विधिना परासुं ।
तौ दंपती श्रवणयोः कटुभिर्विलापैः कूलंकषं रुरुदतुः कुरराविवौतौ ॥

दृष्ट्वा तौ भगवानपि व्यासयतिः किंतु कृपालुतया [*]हृजहासमानो निरंतरनिष्यंदमानबाष्पयवनिका(म)व्याहन्यमानविलोचनपदमासाद्य तमग्रजन्मानमप्राक्षीत् ॥ अथ गृहमेधिन् कुत्रस्थो भवान् कथंकारमस्मिन्कंटकिते काननप्रांते कोवा हेतुरस्य कुमारस्य परासुतायाः ॥

इति पृष्टो द्विजातींद्रः तेन तेजोमयेन सः ।
प्रत्यभाषत शोकांधो बाष्पगद्गदया गिरा ॥

---

§कोल   *[मुहुः]

भगवन् किमिति ब्रवीमि जननांतरमेदुरितानां परिपाकमिमं मेदुरितानां अत्र दिशि दक्षिणस्यां वर्तते पंचषघटिकाभिरासाद्यः कोविदग्रामः । तत्र वास्तव्यकुटुंबिनोरावयोः कुलतंतुरेष कुमारः । अयंतु प्रभातएव समिदाहरणाय सवयोभिस्संधुक्षितकुतूहलः कंटक तरुमंडलगहनं गहनमेतदागत्य स्वैरं मृगराजवद्विचचार ॥ चरंतमेनं विनिहंतुकामेन कृतांतेन नियुक्त इव कश्चन जरद्वटविटपिमूलकोटर-स्थोददंश महान् दंदशूकः ॥ दष्टमात्रमेव विषविप्लुष्टवपुषं नष्टचेतनं दृष्ट्वा तमेनमिष्टैः कतिपयैस्संयंत्रितचेतास्तं वटमूलप्रदेशमासाद्य प्रलया शनिपातितमिव पादपंपरेतमेनमपश्यं ॥ दृष्टवांश्चामुं भुजांतरमारोप्य समुन्नीतजनघोषतयावलंबितधैर्यलेशः प्रदेशमिमं समुपागमं ॥ समुचिते मयि वर्तमाने किमेनं ममतातं विधिरीदृशीं दशामनैषीत् ॥ इत्यादि विलप्य पुनरपि गृहिण्यासममाचक्रंद ॥

आश्वास्य तौ वाग्भिरयंरुदंतौ व्यासो यतिर्विस्मयनीयकर्मा ।
अभ्युक्ष्य कामंडलुकीभिरद्भिरजीवयत्तं पुनरेवबालं ॥

सुप्त्वा प्रबुद्धमिव तं सुतमुत्थितं तौ निर्विण्णविस्मयपयोनिधिमग्न(चेतौ)‡ ।
पुष्यत्प्रमोदपुलकांकुरमांसलेन बाहायुगेन पितरौ परिषस्वजाते ॥

सुतेनसाकं सुकुमारभासा कृतप्रणामौ कृतिनं यतींद्रं ।
जायापती तावदरण्यभागादानाययामासतुरात्मगेहं ॥

तत्राहानि द्वित्राणि सत्राशिष्यैस्समाराधितो भगवान् सुमतिं तं कृपयानुगृह्य तत्रस्थां महाचलपुरीं शनैश्शनैरुपासीदत् ॥ त्रिविक्रमो-

‡ चित्तौ

श्वातिमदप्रक्रमभुवा, पटीयसा प्राकारवलयेन परिचुंब्यमानह(नु)*न्मुखालोकालोकाचलेन वलयिता धरणिरपरेव या समालक्ष्यते ॥

गेहे गेहे यत्र धृष्यंति रात्रौ मुक्ताबद्धेष्वंगणक्ष्मातलेषु ।
प्रालेयांशोर्बिंबितं चिह्नभूतं घ्रायंघ्रायं कृष्णसारं हरिण्यः ॥

मध्येदिनं गोपुरशृंगहेमकुंभैरभेदं गतमब्जबंधुं ।
अजानगेकेवलमूष्मभावैः पार्श्वस्थिता यत्र च वालखिल्याः ॥

यत्र कायकांतिविशेषाधिवासोस्तवसुखातिशयानुबुभूषयानतीर्णानामिव विद्याधरीणां मधुरयोः कंठनालकरतलविपंचिकानिनदयोः श्रोतारः कुशलापि भेदं निर्णेतुं नपारयंते ॥ यत्र तपनीयमयीषु सौधधोरणीषु विशंकटमणिविटंककुलायनिलयिनः शुकशावकाः परिणत दाडिमलोभेन कुतूहलमंडलितपक्षतयः चटुलचटुलेन लेलिहंतिपद्मरागशकलानि ॥ यत्र च बिरुदपदकटकायितभरतमुनिफणितिमर्मनिर्णयानां सकाशान्नर्तकानां प्रत्यहमभ्यस्तमात्रस्य विद्याविभागस्य परीक्षामिव दधानः भगवान्नृत्यति धूर्जटिस्संध्ययोरुभयोः ॥ यत्र चाभ्रंकषाणि हर्म्याणि रिरंसयाधिरोहतामुल्लंघितगणनासरणीनां गणिकानां माणिक्यभूषणमहःपुंजैर्दिशि बहुधासमेधमानभावनैर्विभावर्योपि वासरंति ॥ यत्रच वसतामतियत्नसृष्टैककुबेरस्य भगवतो वेधसोपि मनसि विस्मयमुद्वेलयतां नरपतीनां समीक्ष्य संपत्तिमनियत्तामधोक्षज(रक्षस्थन्यं),† केवलं कौस्तुभसहायमवबुध्यते ॥

तत्र द्विपेंद्ररथघोटघटासमृद्धावीथीर्विलंघ्य विविधा विचलत्पताकाः ।
दूरात्समीक्ष्य सतु कस्यचिदुच्चभक्तेः प्रत्युद्यतो बुधपतेरभजन्निकेतं ॥

---

* रि † वक्षस्थल्यं

अथ तस्य महासने वसन् गृहिणः पूजनमन्वसन्यत ।
अभिवेदिसमंतसंस्कृतं यजमानादिव पावको हविः ॥

एवं तेनाभ्यर्चितो हर्षमाणकोटिं नीत्वा कर्म साध्यं समस्तं ।
ध्यायन्नेवं चेतसा व्यासयोगी सार्धं शिष्यैस्तां त्रियामामनैषीत् ॥

अपरेद्युरुदिते निशीथिनीसमयनिर्दयनिश्शोषितनालीकिनीहर्ष-दोषाकररोषेणेव घुसृणरसमसृणितच्छायाकांचनकुंभिकापरिरंभसंभ्रमेणेव प्रथमगिरिशिखरविपिनविविधजपादलनिकुरुंबप्रतिबिंबेनेव हरिचंदनद्रव-संभावितसिद्धमुनिजनार्घांजलिसलिलांगीकरणेनेव पाटलवपुषि भगवति भानुमालिनि नातिदूरमंबरतलमवलंबमाने निर्वर्त्य निखिलानि प्राभाति-कानि करणीयानि महतीमास्थानमंटपिकामधिवसंतमनतिसमीपवर्तिभिः कनककेयूरमाणिगणप्रतिफलनच्छलेन शरणं भवेति भुजचंडिमानमिव सांत्वयद्भिः सामंतमहीपतिभिरुपास्यमानं सकलकलाविचक्षणानां कटक-मकुटहारादिभिर्भूषणजालिकाभिः रत्ननिर्विशेषविभवानां बहुविधां धर्म-पदवीपरिपाटिं निश्चितवतां विपश्चितां वदनकमलेषु सकौतुकं दत्तदृष्टिं शुभपरतंत्रमंत्रपरंपरानिराकृतसुमंत्रादिभि रद्भुताभिरूप्यप्रविशिशिक्षयि-षया बहिर्गतैरिव निजविवेकसंतानैरनुकूलाचरणरंजितप्रकृतिभिरमा-त्यवर्गैरधिष्ठितनेदिष्ठमणिकुट्टिमं कालसरीसृपकठोराकारभीषणयाकोशपु-टादीषदुद्धृतया पुनरपि विरचितप्रस्थानमंगलाय विश्वदिग्विजयाय धूमधोरण्येव प्रतापानलस्य कादंबिन्येव भुवनमंगलांकुरस्य वेणि-कयेव वीरलक्ष्म्याः रोमरेखयेव सांम्राज्यदेवतायाः कलिंदकुमा-रिकयेव कीर्तिगंगायाः निर्मलया निशितधारया कर्बुरितासनभागं शातकुंभस्तंभावसक्तगया (?) सौम्यताजुषा वपुषा पुनरुद्भवंविभावयंत

मिव भगवंतं नरकंठीरवं वरवर्णिनीभुजलताविधूयमानश्वेतचामरिकाभ्यां तरंगिणीवीचीलालितहंसमालाभ्यां शरत्समयमिव विशेषदर्शनीयसौभाग्यसंपदमाप्रपदलंबमानधवलकंचुकैरुभयतः कपोलतलडोलायमाननीलपटवेणीगुणानि रक्तशीर्षण्यानि धारयद्भिस्सिंदूरितकुंभनिष्यंदमानमदजलधारैर्बहुभिरैरावतैरिव दंतिभिरालोकयालोकयेति सोसूच्यमाननियमसेवासमागतमहाप्रधानपुरुषसंघातं राजानमपि सर्वमित्रमुदारगुणमप्यदीर्घसूत्रमचलमपि सततसानुकंपं कृष्णसारमपि शार्दूलविक्रमं महोच्छ्रयमपि नितांतगंभीरं कालमेघमिव भुवनधुरंधरं कौस्तुभमिव त्रासदोषपरिक्षीणं सरस्वतीनयनमिव ब्रह्मदर्शनोत्सवपरं मंदानिलमिव सुस्पर्शनमपरिमितयशसमसदृशरामणीयकमगणनीय विद्यावैशद्यमप्रमेयलालित्यं सिंहसंहननं नरसिंहमहीपतिं पुरोधसा सह भुवनबंधुर्नामसचिवादिभिः प्रश्रयेणानमितपूर्वकायः करतलपिहिताधरो मंदंमंदमुपसृत्याधिकंठं सविधमेवमब्रवीत् ॥ स्वामिन् देवेन बहुधानिशमितताहशानुभावस्सभगवान् व्यासयोगी पूर्वेद्युस्सायमागत्य हिमगिरितटमिव जाह्नवीपूरः कमपिकोविदावासं पावयति ॥ अत्र देवःप्रमाणमित्यपससार ॥ राजातु तदाकर्णनमात्रेण समेधमानकुतूहलः समुत्थितइव मनसा ससंभ्रममवलोक्य सभामंडलं आत्मप्रतिबिंबमिव तमेव तत्रभवतो मुनेरानयनाय समुचितपुरुषैस्सह पुरोधसा च तरसा संप्रेषयामास ॥

अथ चंचलचंचलालतै र्जलवाहैरिव पर्वताधिपं ।
पुरुषैर्मणिवेत्रपाणिभिः परिवीतस्स मुनींद्रमभ्यगात् ॥

---

‡ [प]

शतशः प्रणिपत्य दूरतः समयज्ञः सचिवस्तपोनिधिं ।
अवदद्भगवन्नृपो भवत्परमानुग्रहमिच्छतीति सः ॥

तावदेष स तथेति दयालुर्भूपतेरभिसदस्सह शिष्यैः ।
आदिभिक्षुरिव नाकिनिकायादालयं सुरपतेर्निरगच्छत् ॥

तेन सचिवेन पुरस्कृत्यानीयमानं सकुतुकमालोकयतां पौरजानपदानां दृढलग्नैरक्षिपातैरंगीकृतभिक्षुभावं सहस्राक्षं क्वचिदतिप्रमाणैर्दानवारिलहरीपारिमलपारणपरायणभ्रमरपटलांधकारितहरिदंतरैश्चूलिकालग्नसुवर्णांकुशलतैः प्रवर्तिततमःप्रदीपिकालेशैरिव निशीथिनीयामैःकर्णकुहरनिकटलंबिपांडुकंबुभिर्दरीमुखदरीदृश्यमान केसरिकिशोरैरिवांजनाशिलोच्चयैः प्रलयकालांबुदप्रतिबिंबैरिवमदावलकदंबकैश्च क्वचिदतिजवनैरुदभ्रतरपूर्वकायैरुच्चैश्रवोविजिगीषयेवादिवमुत्पतद्भिरितस्ततो वालहस्तविक्षेपयाकंकाटिकारयभररभटीमिव(?)धिक्कुर्वाणैर्भीषणद्रुततरहेषितनिध्वानेन महात्मानं गरुत्मंतमिव तर्जयद्भिः अखंडमणिखचितकनकभांडपरिमंडितैर्मेरुगिरिभिरिवमहोत्सेकैर्वनायुजबाह्लीककांभोजप्रायैर्घोटकैश्च क्वचिन्मेचकवारवाणनियंत्रितस्कंधभागैर्विनमित मतंगजमदमषिकलुषित सटाच्छटै रणकंठीरवैरप्रपोतप्रतियोधकलिकायमानधवलचामराभासुरकुंभैः मौक्तिकैश्च क्वचिदचिरनिर्मुक्तकालभुजगभयानक विकोशकरवालैर्विद्रुमरसारूषितानिसंहृतांकणनिहतरिपुयोधगणविधीयमान मानभिदा व्यथासहनतया बहुधावतीर्यप्रेतकरग्राहमनुनयंतीव सप्तसप्तिमंडलानि फलकानि धारयद्भिरुद्ग्रथितकुंचिकैश्चर्मभिश्च क्वचिद्विशिखनिरोधौषधिगुलिकोग्रस्थूलभुजादंडैस्संवर्तककुपित रुद्रभ्रुकुटिघोरत्विषि धनूंषि दधानैः पश्चाद्घटितकलापकलापेन सततमायोधनविहरणायप्रेर्यमाणै

र्धानुष्कैश्च क्वचिद्दर्शनावसरपरीक्षमाणैरुपायनपाणिभिर्निर्याणायानुविधायिनो दंडिनः प्रतिकलं राजकृत्यमनुयुंजानैरंतरीपांतरागतैरपारैर्नरपतिभिश्च क्वचिदधिमणिवेदिनिषेदिभिरशेषनीतिपारदृश्वभिरार्यवेषैरजहद्विबुधजनसेव्यैः करोदरबदरीफलनिखिललोकव्यवहारैः परिणत(प)§योभिर्धर्माधिकारपुरुषैश्च क्वचिन्नवनवपेशलालापकुशलैः प्रथमशिष्टैरिव भगवतो भृंगरिटेः प्रासावयवैरिव पंचमरसविशेषैः परिहासकैश्च तुमुलितानि भयंकरदौवारिकमहाहुंक्रियासमुत्सार्यमाणजन विमुक्तमार्गावकाशानि बहूनि कक्ष्यांतराणि विलंघ्य शनैश्शनैरागच्छंतमध्यक्षेणेव कनकद्विपस्य सीमोपलेनेव विद्रुमरोचिषः कुलदैवतेनेव कुंकुमस्य मर्मांशेनेव सिंदूरस्य दिशिदिशि वदातामहता वपुरातपेन साटोपेनेव सरस्वती सरित्प्रवाहेण सर्वतः साभामंटपमापूरयंतं व्याकोचमातुलुंगदलसुषुमालघिमानिर्माणकर्मठेन रक्तपटपरिस्तोमेनेव चतुर्थाश्रमदंतावलप्रज्वालपटलेनेव ज्वलनस्य मृदुलकाषायपटेन परिवीतं बालातपच्छदोपगूढमिव प्रथमाचलशिखरं नंदनतरुपल्लवाकीर्णमुखमिव जगन्मंगलपूर्णकुंभं, संध्यापयोदनादकुंठमिव तरुणतपनमंडलं समंततः ह्रदस्नातोत्थितमिव जमदग्निकुमारं चिरेणसमुत्सारितेन पुनर्गतकल्पनाय शरणागतेनेव रागेण गृहीतचरणयुगलं प्रत्यग्रबिससूत्रिकाद्राघीयसीभिर्निजागमनकुशलं राज्ञे निवेदयितुमिव दूरतएव पुरःप्रसर्पिणीभिः श्वेतद्वीपदर्भशलाकाभिरिव पावनीभिः पदनखादीधितिभिर्मणिकुट्टिमेषु पिष्टोपलचूर्णप्रसादनरेखा इव कल्पयंतं तिलकजलकर्बुरि *वासवमणिसंवलितकार्तस्वरवसुधातल किरणनाळेनेव अन्यादृशविश्राणनाभ्यासिषया समुपागतेनेव कल्पलता

§ व   * [त]

स्तंभेनेव भुजाभिरामतानिर्जितैर्वेणुकुलैर्निरंतरसेवनाय प्रोषितेनेव मुष्टि धारितेनतनुतरेण दंडेनाघ्रातवामभुजशिखरं पावनतीर्थोदकपरिपूरितं लंबमानमिव करतलरेखाकलबिंबं पंजरमिव नियमशुकस्य पद्मराग कमंडलुं हस्तेनापसव्येन धारयंतं श्रवणकुहरसततनिपतद्वासुर्†नकथा तरंगिणीलग्नशैवलमंजरीकयेव तरुणतुलसीकर्णपूरिकया श्यामलित कपोलपालिं प्राथमिकमलयानिलमृदुलास्यदलनलालनदरदळितचंपक दळपिंजरेणकौशेयकेन परिकलितमूर्धानं फणिकुलफणामणिमसृणित सुरसिंधुलहरीशिखरितामिवभगवंतं महादेहं स्निग्धतारकेणकारुण्यतटाक परीवाहेण प्रगल्भविक्षेपणचक्षुषा त्रिभुवनीमिव तृणीकुर्वाणं पंचमुद्रि-कापुष्कलितोर्ध्वपुंड्रिकापरिमंडितमश्रोतारंकलिविलासिताना, मनभिक्षम मर्षस्य वैदेशिकं रागराज्यस्य दुर्लभमहंकारस्य दुरीकारं मदविकाराणां आप्तबंधुमार्जवस्य, प्रत्यूहमशुभानां, अमार्गमनृतस्या, गणनीयं मोहस्य, विलासं विश्राणनस्यांगीकारमखिलविद्यानामशनिपातमहितपादपाना मुन्मेषं वैदिकाचारस्य, निगलमिंद्रियाणां राकाभंचंद्रिकायामहीयांसं भगवंतं तं व्यासयतिसार्वभौमं दूरादेवावलोकयन् नरपतिः कंदलित इव विस्मयेन, पल्लवित इव भक्त्या, कुसुमित इव विनयेन, प्रफुल्ल इव प्रमो देन, फलित इव पुण्येन, समृद्ध इव भद्रेण, सकलैरपि राजलोकैस्सह सरभसमासनादुत्थितः त्वरयंतीमिव प्रत्यागमनं महता मर्मररवेण कठोरशरदिंदुकौमुदीमिव सूक्ष्मतरां पटीं कटितटेदृढमा(रद्ध)न्नुपसृत्य धरातलपरागतिलकितललाटवक्षोभागः भूरिशः प्रणनाम ॥ तेन भगवता समनंतरमाशिषः प्रतिपादितामभिनवकलहंसिकांडकमनीयां करकमल

† बध्न

जनितामिव मुक्तां घनतरकारुण्यरसदुग्धरसपिंडितामिव गंधगुलिकां अंजलिना सबहुमानमादधानो लोचनस्पर्शपुरस्सरं शीर्षे निधाय भक्त्या स्वयमेव दत्तहस्तावलंबनो महीपतिः तं तापसकेसरिणं गिरिशृंगमिव तुंगकृष्णाजिनोत्तरासंगं वेत्रासनमारोप्य विधिवदभ्यर्चयामास [ तदनु तदनुमत्या स्वयमपि दूरतः कृता(त्मानो)‡पवेशोविनय विकचां वाचमवोचत् ॥ भगवन्प्रतिसमुन्मिषितं मम प्राक्त(नी)नसुचरितसंदोहेन । अयं खलु पलायनसमयो मदीयस्य दुरितस्य । शोधनोपलेनेव मणिमुकुरमद्यतनेनभगवदागमनेन निर्मलितमात्मकुलं । अधुनाविमुंचति ममचक्षुश्चिरेणभगवदनुभाववर्णनाकर्णनसमुदीर्णसुख पूर्णयो*रीर्ष्यां, भुवनमिव भगवदधिष्ठानत्वेन सकलमुनिवृंदवंदितस्य सनंदनस्य सन्निधानेन संदानितंबिभिंद परमानंदं सत्यलोकस्य ॥ मन्येहमिदानीं भगवतो दर्शनादेकतमविरहविधुरमतिस्निग्धमर्यमवर्गं ॥

इत्यूचुषो नरपतेर्नरसिंहभावमाकारगोपिकलयन्निव भास्वराभिः ।
दंतावलीविसृमरद्युतिपूलिकाभिः संप्रत्यवोचत मुदा यतिसार्वभौमः ॥

राजन्नैसर्गिकीखलुतवान्वयस्य पराध्यसमाधीनां साधूनामेवंविधा समाराधनविधिबद्धा श्रद्धा ॥ किंब्रूमस्ते, विचित्राणि चरित्राणि प्रवर्तयंति यानि देशेषु कंटकारीणामेककालनाशं ध्रुवं । दर्शयंति यानि सांपरायकनिहतरिपुमहीपालेषु युगपदेव वयसां वियोगयोगौ ॥ कारयंति यानि द्वीपांतरेषु प्रतापचकितसामंतकरांशानामेकदैवछेदलाभौ ॥ अपारयंति यानि वैरिनगरेषु सममेव केतूनाममोकामोकौ ॥ किंबहुना ॥

‡ [त्मो]   * कर्णयो

नृपनलनहुषादेर्नीतिमार्गाध्वनीन
स्सकल इव दिगंतैः केवलं कीर्तिभावैः ।
भुजजितभुजगस्त्वं भूप, तेना(वि)†शेषे
गुरुमपिवचनानां कोमलानां महिम्ना ॥

इत्यनुगृह्णत्येव भगवति महानुभावे व्यासयोगिनि घटिकाविभागप्रकटनपटुः पटहनिध्वानबंधुर्मध्यंदिनसमयशंकी शंखस्य गंभीरध्वनिरुदजृंभत ॥ निशम्यतावदुचितज्ञेन भगवतोऽतिक्रामति देवताराधनसमय इति विज्ञाप्य सह राजलोकैरुत्थितेन प्रांजलिना दूरमुपगम्य तेन वसुधाधिपेन विसृज्यमानो विबुधैरावेष्ट्यमानो मंत्रिभिराभाष्यमाणः पुरोहितैरालोक्यमानाश्शिष्यैरनुनीयमानो वंदिभिरभिष्टूयमानः पौरजनैरभिवंद्यमानो ब्रह्मसंघैस्सभगवान्व्यासयोगी भुवनबंधु(नगेन)‡ साचवाधिपेन निर्दिष्टनिर्दिष्टनरपतिप्रहिताभिर्विविधाभिस्सपदातिभिस्समग्राम तिविशालामनेकशालाबद्धविताना(ना)मपरिमितस्थूणामभ्रंकषसौधशिख राममृतमयवापिकामभिनवामपरामिव वैकुंठभुवमवनितलमवतीर्णामिव पितामहावसतिं शाश्वतीं मठोपकार्यां शनैश्शनैः प्राविशत् ॥

पदार्थसंघैर्ललितैः परिष्कृतं प्रवृत्ततालध्वनिलक्षणांचितं ।
कविप्रबंधं यशसेवनायको विगाह्य भूम्ना समठंसमैधत ॥

तत्वोदारै रुचितवचनै स्तानुनुज्ञायसर्वान्
स्वस्वावासं प्रति सविनयं कल्प्यमानप्रणामान् ।
पूतैस्स्नातस्तदनु सलिलैः पूजयित्वा स देवं
साकं भिक्षामकृत बहुभिः कोविदग्रामणीभिः ॥

---

† ति ‡ नाम्ना

तदनु महापरिणाहेन मृगपतिपोतसटाव्याप्तेनेव पेशलेन चित्ररल्लकदंशितोपरिभागेन शतमखचापपटलीशलाकानुबंधेनेव शारदाभ्रखंडेन सुकुमारतूलभरिततुंगदुकूलपरिधानशेखरितभागेन धवलकंबलेन सनाथीकृतं भुक्त्वास्थानमंटपमधिरूढः कृततीर्थसेवनः भगवान् शिश्रूषया समागत्य सेवमानानां सुधियां केनचिदतिसमीपोपविष्टेन मधुरस्वनेन पवनलिपिग्रहणेन विदुषा शिष्येण पठ्यमानस्य महतो भागवतवाक्यसंचयस्य तत्वभावमर्थतात्पर्यं बोधयन्नेव वासरमनैषीत्

तस्योदंतं जगदुपकृतौ योगिनो जागरूकं
मध्येवारांनिधिमधुरिपोर्मारुताशींद्रमंचे ।
निद्राभाजः कथयितुमिव द्वेषिणो दानवानां
प्रापत्कूटं सपदि तपनः पश्चिमक्ष्माधरस्य ॥

विहितसकलसंध्याकर्मणश्चेतसा तद्गशमस्टदुभाजो ध्यायतो वासुदेवं ।
जनयितुमलिनिद्रामक्षमा तस्य भिक्षो रजनिरपययौ सा तर्जितेव क्षणेन ॥

एवमुपयातेषु बहुषु पुंखानुपुंखभूपतिबहुमानेषु दिनेषु ॥ कदाचिन्निर्दयाभ्यामर्दन विहारसहनदोर्दंडैस्सामंतनृपशार्दूलैस्संमर्दितां विवेकरंहस्विभिरमात्यसिंहैः परिबृंहितां विविधानां पुरोधसामुपरोधेन समेधितसंबाधामत्यद्भुतयुक्तिभिस्तटस्थैर्विद्वद्भिरुपासीनां परिपंथिगिरि घटापक्षविक्षोभणपविभिः कविभिः संभावितामपारविस्मयभारोदरैः पौरैः परिपूरितामगणनापदैर्जानपदैरासादितामसंदसुंदरस्तुतिकंदलनंद नीयैर्वंदिभिस्तुंदलितां प्रतिभटविपिनदावपावकैस्सेवकैरेकीकृतामास्थानींमहीयसीं सुधर्मामिवसुरपतेरधिवसतो नरपतेर्नरसिंहस्य समक्षं चिरादुक्तधर्मातितिक्षवःकामिनइव कलितावलेपाः, करटिनइव कल्लो-

लितमदभराश्चक्रइव समाहृतबहुमन्यवः पुंजीभूतविद्यातिरेकादहमहमिकया विवादयिषमाणाः खरतरगर्वाः सर्वेभट्टमुख्यास्सर्वेदुर्वादिनो मनीषिणा भगवता तेन तपस्विना व्यासयोगिना प्रसंगादिव स्वयमेव महतीं जल्पकथामारभंत ॥ तत्र प्रथमं नियंत्रिते निरूपणीये समुपजाते वादिप्रतिवादिनिर्धारणे कल्पितेषु समुचितगुणसमग्रेषु विषमसंख्यानेषु सभ्येषु संभृतेस§स्तसंमते महत्यनुविधेये स्थापिते लिपिकरव्यवहृतिमुखे लेखके समाबद्धायां सकलनिग्रहोच्चारणसंधायां निदर्शनप्रयुक्तानु साधकानुमानचमत्कृतौ कंटकोद्धारणे अभ्युपगतायां वीप्सायामुपनयनिगमनयोस्तथातथेतिनिर्देशे सर्वनामानुवादने सिद्धसाध्यप्रयोजकानां स्वशब्देन स्पुटभूतहेत्वाभासपदेन वा समुद्भवत्स्वपिमतभेदेषु माणिकारमतमनूद्य विरचिते समयबंधे ॥

इतरेतरमुच्चयुक्तिभारास्तरसोपर्युपरि प्रकृष्टहर्षाः ।
कथतामभवन्गतास्तदानीमुभयेषामपिवासरादशाष्टौ ॥

तदनंतरं

स(पदा)*युक्तिपरंपरैः प्रतिभटान्वाग्गुंभकोलाहलै
र्जित्वा व्यासमुनिस्सखेलमखिलान्सध्येमहीभृत्सभं ।
पाठांतेबिरुदाक्षरावलिमिव व्यक्तं लिखन्निग्रहं
तानेवाकृततुंगजंगमजयस्तंभान्व्यथाकीलितान् ॥

समीक्ष्य तं तत्र नृपो विलक्षः प्राबुध्यत त्रीणि मुखानि मुक्त्वा ।
भुवं गतं तादृशमेव तेजो वाग्देवताप्रेमकलारसज्ञं ॥

तदानीमेव प्रहृष्टमनाः वसुमतीपतिरष्टापदरसलिखितबहुविध बिंबाडंबराणां वसनानां संफुल्लहल्लकदलतल्लजसमुल्लासिनीनां कुलायि-

§[म] *[द्यो]

कानां शुकपोतपक्षतिसुषुमावंचकानां नवमणिकिरणजागरणमांसलित फलफल्यतृणीकृतचिरंतनमानस्य चतुरंतमानस्य शरदुदयनिर्णेजित कौमुदीपूलिकासुकुमारयोर्धवलचामरयो र्बहुलरागप्रकटनाविपंचिकायाः कुंचिकायाः निस्सीमप्राभवदात्रीणां कनकपात्रीणामगणनीयगुणग्रामाणां ग्रामाणामनवरतमतिथिजनपूजनकर्मठानामितरेषामपि(बह्वी)† यसां वस्तूनां निचयमदात् ॥ तस्मिंश्च विनीतवतिविशेषादार्यैर्प्रयुज्य कुशलगर्भितामाशिषमंबुधेरिव ततोराजभवनात्कालमेघइव सभगवान्वर्षेणेव कलापिनइव कलाविदस्संमोदयन् गिरितटमिव मठालयमध्यतिष्ठत् ॥

जित्वैवमेव बहुधा परिपंथिवर्गं प्रोद्दामकीर्तिनिबिडोरुनभःकटाहः ।
संस्थापयन्सकलधर्मकुलं यतींद्रस्तत्रावसत्सबहुलाश्शरदः सुखेन ॥

ततस्सनरसिंहभूपतिः अपरमिवमारं कुमारं समग्रगुणं तं मारायनामानमधिराज्ये समभिषिच्य कालपरिणामेन जेतुमिव विक्रमेण शक्रं द्राघीयसा शुभचरितसोपानपथेन दिवमध्यरुक्षत् ॥ तमपि सभगवान्न्यायेन पथा संचरमाणं प्रचंडरिपुमंडलविहरणशमितदोर्दंडचांडिमकंडूविशेषं कोविदकुलसेवनकुतूहलिनं गुरुरिव कुलिशपाणिं क्ष्मापतिमनुगृण्हन्तरंगिणीमिव राजहंसो मारुतमिव मलयमेखलातरलमणिरिव हारलतां शशांकइव शंकरमकुटं, तां पुरीं चिरादलमकरोत् ॥

॥ इति सोमनाथकवि विरचिते व्यासयोगिचरिते चतुर्थोल्लासः ॥

---

† [बह्वी]

अथ नरसभूपालस्याप्तैरमात्यमदावलैस्सयतिवृषभश्शश्वत्संप्रार्थ्यमाननिजागमः भुजगनगरीं भूमिं भित्वोपरीवसमुत्थितां विपुल वीथिकां हृद्यां विद्यापुरीं समुपागमत् ॥

स्वेन गाढमुपगूहमानपापंपयोपरि लुठत्तरंगया ।
या विडंबयति जंभभेदिनस्स्वर्धुनीलहरिभूषितां पुरीं ॥

वाराशेस्सुतयानिशं सुरभितं वक्षःप्रदेशं वह
न्मंदीकुर्वदभंगुरांगमहसा वालाहिकीदुर्मदं ।
उद्दामां शुभसंपदं निजजुषामुल्लोलकल्लोलय
त्तेजोयत्रपरंपरं विजयते श्रीविट्ठलेशाभिदं ॥

चलद्तुंगावीचीकलकलितसौभाग्यभरितं
विहायस्स्वं यस्यां विपुलमपि कैलासमदनं ।
स हेतोः कस्माद्वा सकलजगदीशोपि भगवान्
विरूपाक्षः साक्षाद्विशदयति साम्राज्यपदवीं ॥

यातुंगस्थिरभर्मगोपुरांतराळप्रत्युप्तस्फुटबहुमौक्तिकावलीनां ।
भूयिष्ठैर्बहिरभिसारिभिर्मयूखैः कौबेरीं हसति पुरीमिव प्रकामं ॥

यस्यामुदारनृपमंदिरचंद्रशालावातायनेदरपरिक्रमगाढलग्नां ।
दीपाग्रधूममषिकां शिशिरांशुबिंबे मोहात्कुरंग इति मूर्खधियो वदंति ॥

हर्म्यावलीषु सह सारसलोचनाभिर्निद्राजुषां प्रतिविभातमधीश्वराणां ।
वातायनादुपगतो मरुदापगायाः वैतालिको भवति सांद्रमरुत्किशोरः ॥

अलंकृतानां हरिणेक्षणानां दिने दिने यत्र च दीप्रभासां ।
कपोलभागाः कलधौतकांताः परस्परं दर्पणतां भजंते ॥

यस्यां धरणीतलखचितमणिशिलाफलकानामुत्पततादीप्तिपटलेन सततमंबरपथेन संचरमाणयोः पुष्पवतोरवतरता रोचिषा च प्राणिनां

नित्यानामिव न कुत्रापि छायादृश्यंते ॥ यत्र च निशि सौधाग्रमणिकुट्टिमजुषो मुग्धवारहरिणीदृशो मौर्ग्यवशादासन्नानि तारकदंबकानि मौक्तिकधिया कुतूहलिन्यः करकमलेनादायादायजंगमतयासभीतिससंभ्रमं प्रतिमुंचंति ॥ यत्र च रमणीनां चरणतलरागपराकृतरामणीयकभरैर्मित्रकरामर्शाश्वासितैरपि विदलितहृदयैरनवरतं सरोगैर्ह्रीयते सरोरुहनिवहैः ॥

यत्रांगनानां लपनार्थितश्रीर्निरुद्धमंदस्मितकौमुदीकः ।
विभावरीशोऽपि सृजत्यजस्रं प्रालेयलक्ष्येण सबाष्पधारां ॥

लीलागतैर्यत्रविलासिनीनां प्रावीण्यसिध्यै बहुशोऽनुनीय ।
स्वजातिभिश्चोदित एव कश्चिद्व्रजाणमद्यापि बिभर्ति हासः ॥

इतस्ततस्संचरतां जनानां रथ्यासु यस्यां बहुलक्षपासु ।
वितर्दिकास्तंभमणीमयूखः करोति नित्यं करदीपकृत्यं ॥

मंदारसौरभ्यमनोहराणि संक्रंदनारामसहोदराणि ।
यस्यास्समीपोपवनानि दृष्ट्वा विसिष्मिये व्यासयति र्महात्मा ॥

ततः नरसमहीपालः क्रमेण नगरोपकंठमागच्छंतमेनं भगवंतं व्यासयोगिनं सचिवमुखादाकर्ण्य संवध्यमानकुतूहलः प्रत्युज्जिगमिषया सराजलोकः सरभसमासनादुत्तस्थौ ॥ तावदत्र संभ्रमैस्सज्जीकृत्य करद्वयधृतखलीनगुणैरसकृत्क्रियमाण मृदुतरचपेटास्पालनस्सांत्वनैस्सादिभिस्सपदि समुपनीतं चटुलतरखुरपुटतया जुगुप्समानभूतलस्पर्शं वपुष्मंतमिव सुकृतराशिं वदनराजीवपराजिततया तुरंगभूयमंगीकृत्य वोढुमागतमिव सारंगाचिह्नं गंडोपलमिव कैलासशैलस्य न्यासीकृतरथ्यामिवार्थस्य विजययात्रासमुत्थापितरजःपुंजपूरणचकितचाकितेन दुग्धसा-

गरेणेवोपलीकृतमुन्नमित कर्णपल्लवमुन्मिषित हेषारवमुत्तुंगधवलतुरंगमधिरूढः किरीटतटघटितमुक्तामणिनिकरसमुत्पतितेनेव प्रभाचक्रवालेन सितातपवारणेन संपादितच्छायः कमलकर्णिकाकर्णपूरेणेव राज्यलक्ष्म्याः कुंचेन कनकनालेन परिवीज्यमानस्सविधवर्तिभिर्विविधनटन लालनपरतंत्रघोटकधावनप्रकंपमान कर्णावतंसैराप्तैर्महाप्रधानैर्निबिडित परिसरोविशालविमलोष्णीषकलितैरामुक्तकंचुकैराविष्कृतहारमणिनिष्कपरिपाकैरुद्भ्रमितचलांचलभुजांचलैर्मागधैः पार्श्वे सहेलमुच्चैःपापठ्यमान विक्रमबिरुदमाकर्णयन् भुजारोपितनिखिलवसुमत्यतिवेलभारतया व्यपगतश्रमैस्सनृपनिकरैस्सेव्यमानो बहुभिः कुलगिरिभिर्विकटकरटिकटाहनिश्चुतमदप्रवाहैस्तंबेरमैरनुरुध्यमानः परिस्फुरत्तपनबिंबप्रतिफलनान्यपरोक्षितप्रतापज्वलनानीव विक्लबाधिधारयद्भिरायुधानिकालकवचनिचोलित स्कंधैरंबरसंचारलग्ननवमेघखंडैरिव चारणगणैरपरिमितैर्योधैः परिवेष्ट्यमानः सततपरिचितपरिश्रमक्रीडनादतिमांसलितावयवैर्विचित्राणि मंडलवलयानि विस्तारयद्भिः किलकिलामुखरमुखैः फलकपाणिभिर्देदीप्यमानपुरोमार्गोबृंहितेन द्विरदानां ह्रेषितेन हयानां क्ष्वेलितेन योधानां आलोककोलाहलेन दंडिनां भांकारेण भेरीणांधणंधणेन निस्साणानां धुंधुमितेन मद्दलानां जुंजुमितेन डिंडिमानां झंकारेण झर्झरीणां घुंघुमितेन शंखानां कूजितेन वेणूनां कलकलेन काहलीनां शब्दाद्वैतामिव जगतीं कुर्वाणः स नरदेवो नगरादतीत्य पदवीं गव्यूतिमात्रां पुरुषोत्तमशंकया सेवासमागतयोरिव दुग्धाब्धितरंगयोः पार्श्वे धोधूयमानयोस्समाह्वयतोरिव कृपाभरेण तस्य भगवतो व्यासयोगिनः श्वेतचामरयोर्युगलं दूरादेवावलोकयामास । तुरंगमादवततार । स च

पद्भ्यामेव संचरमाणः सुमेरुतटरुहेण सुपर्णाकारेण श्लक्ष्णपर्वणा समुज्वलद्भगवत्तेजःप्रपंचासहनतयादूरमपसृतेनोर्ध्वभूतेन मध्यमभागेन वज्रोपलशकलस्थपुटितकुप्यशेखरितकोटिद्वयेन दंडेन परिशोभमानाया दृढनियंत्रितरक्तपटपट्टवितानोपरिभागायाः कनकशिबिकायाः मध्यमध्यासीनं करतलोत्तानितपुस्तक विभागावलोकनजागरूकमनवरत चाल्यमान कुंचमंजसोपरिसरमतिनिबिडतया कृच्छ्रलभ्यमानपदावकाशया शरदंबुदविशदविशदोष्णीषसंव्यानवसनया फणितिविलासस्य भरनैपुणीं याचमानयेव त्रिपथगया बहलयाब्रह्मपरंपरया सेव्यमानं कलितमधुरस्वरगभीरिमतृणीकृत किन्नाराणां गांधर्वनिगमपारावारपारदृश्वनामुच्चावचां नारायणभुजापदानगाथामुच्चैरुद्गायतां विस्मयनीयानु(भावस्स भगवान् व्यासयोगी)[†] । अमुष्य किल वाहनमादिभिक्षोरिव समुद्वहंति शैबिकनिर्विशेषमवसरेषु स्मरणमात्रकृतसन्निधानानि विनमंति महाभूतानि । अनेन खलु पुरा तीर्थपर्यटनेषु अधिकांतारमपहरतेत्युदितमात्रात्सविभ्रमाः कुंभीलका अपि दारुणाः प्रेष्या इव केवलं तरुपल्लवानि चिरमुपाहरन् । अस्य ननु त्रिवासरोपवासश्रांतिजुषो भगवान्बालगोपालः वत्सलतया सुहृज्जनस्येव रहसि साक्षादागत्य सुधामंडलनिर्विशेषं नवनीतपिंडं हस्ते दधानः मणि मंजीरझंझलितमनोहरं तांडवविलासमदर्शयत् । अस्मै किल कृतनिर्मित्सवे चतुराननायेव प्रेमभारेण साक्षात्सन्निहिता भगवती भारती महनीयमहःप्रोहां काममपि मणिलेखिकां व्यतारीत् । एतस्य खलु भवंति वर्षावग्रहयोः कटाक्षवीक्षावशंवदामेघाः । अस्मै हि जना

---

*† [भावं तं भगवान् व्यासयोगिनमपश्यत् ]

मनसाप्यपचरंतो व्याधाइव स्वयमेव वयांसि नाशयंति । एतस्य किल वीक्षणमात्रेणाभिमंत्रितया विभूत्या तिलकितनिटिलभागनृपतयः समर शिरसिकृतवीर्यकुमारवत्प्रतिरिपुललिताकृतीनां भागवतानामुद्दामैः करतलतांडवितमणितालध्वनिभिः परिपूरितसकलदिगंतरालं महातपसमुपसृत्य कोटीरकोटितलावलंबिमणिकदंबपरिचुंब्यमानमहीतलःप्रश्रयेण शतशः प्राणंसीत् ॥ भगवानपि मोदमानमनाः स्मितकिशोरकेसरिताधरकिसलयोवार्षिककलमशा खाभिरिव शोभनफलांतर्वर्तिभिराशीर्भिः कुशलानुयोगपुरोगमैस्समुचितैर्बहुभिरुपचारवचनैश्च संवर्धितेन निजनिदेशाम्रेडनाधिरूढतुरगेण तेन सनत्कुमार इव शतक्रतुना परिष्क्रियमाणश्शनैश्शनैर्नगरमगाहत ॥

तेजोविशेषादतिदुर्निरीक्षं, रथ्यासुरथ्यासु, कुतूहलेन ।
तत्रैनमालोकयतां जनानामुच्चावचं भाषितमेवमासीत् ॥

अनेन खलु भद्रमेकैकतया लक्ष्यमाणास्सुखेन विजयलक्ष्मीस्वयंवररमणा भवेयुः ॥

इत्यादि पौरवचनं निखिलं च शृण्वन्वीक्षाभिरेष विलसत्करुणाकरीभिः ।
व्याकीर्णनव्यमृदुपुष्पपटीरचर्चावीथीरगाहतमेदुरवैजयन्तीः ॥

तदनु समठमागात् क्ष्माधिपेन प्रदिष्टं स्फटिकमणिमयूखश्शारसोपानमार्गं ।
विपुलकनकवेदीविद्रुमस्तंभराजिं मृगपतिरिव कुंजं मेदिनीभृद्वरस्य ॥

तत्र व्यराजत समस्ततमोनिहंता मुद्रासने स निवसन्मुनिसार्वभौमः
मार्तांडबिंब इव मार्गवशेन मंदं मंदाकिनीपुलिनमध्यभुवं प्रविष्टः ॥

अर्चयंतमिममर्घ्यपूर्वया भागधेयपरिणामसात्मनः ।
पार्थिवस्सपदि पर्यपूजयत्पांडुसूनुरिव बादरायणं ॥

स च भगवाननतिसमीपोपविष्टमगणनीयस्यात्मगुणवर्णनस्याकर्णनेन संकुचंतमिव सकलावयवैर्दुर्वहेण विनयभारेण प्रह्वीभवंतं निदर्शनीक्रियमाणानां प्राक्तनपार्थिवानां द्राघीयसीभिः कर्णकुहरमाविशंतीभिः पावनकथातरंगिणीभिः सिक्ततिलमिव तुमुलपुलकितकपोलमुद्वहंतं नरपतिं प्रांजलिं चिरेण भगवानभिगमनाय तमन्वजानीत् ॥ तस्मिन्गते समुचितं सकलं करणीयं क्रमेण स दिवानिशमत्यवाहयत् ॥ एवमेव भक्त्या संभावयंतं रहस्येनं धर्मपदोपदेशेन प्रत्यहमनुगृह्णन्विविधानीकस्तेजोरसातलसांम्राज्यधौरेयकलावाकमलासनालिंगनसुखमक्षममिति केवलं निपुणमतिभिः शिष्यैराशंक्यमानस्सतपोनिधिस्तत्रैव चिरमवसत् ॥

बहिर्गतैरंतरमप्रसारैराच्छादितं व्यासयतेर्यशोभिः ।
ब्रह्मांडमालक्ष्यत शुक्तिलिप्तंतपः प्रकुर्वाण इव प्रथिम्ने ॥

एकदा तु तस्य व्यासमुनेरन्यादृशपरिपाटिं मनोवृत्तिमिव शारदायाः पार्थकृपाणीमिव कर्णारुंतुदामैरावतसलिलक्रीडामिव क्षोभकरीं समीरगतिमिवामोदहारिणीं वसंतलक्ष्मीमिव महाशोकसंवादां विजयकथामाकर्ण्य विषवल्गविटपिन इव महेर्ष्यया परिवेल्लिताः प्रयाग पुलिनप्रदेशा इव सन्निहितसरस्वतीविलासावरवर्णिनीकटाक्षा इव श्रुतिपारदृश्वानो भूपतय इव दुर्वारशास्त्रप्रणेतारो गंडोपला इव महीभृत्कटकस्थितिजुषः शबरा इव बहुपक्षव्याहारकृतमुखाः केचिदंगवंग कलिंगमालवचोलकेरलादिविविधदेशेभ्यस्सरोषोद्वेगमापतितमात्रा एव विपाश्चितः संघीभूयाहंप्रथमिकया वादेनविजिगीषवो राजकुलद्वारतोरणस्तंभनासायां दर्वीकरजिह्वायामिनीं बिरुदपत्रिकां बबंधुः ॥

आडंबरेण महता भुवि दृश्यमानाः सर्वेपि ते युगपदेव धराधिपस्य ।
आमर्दितां सचिवपौरपुरोहिताद्यैरास्थानभूमिमधिरुह्य ततो निषेदुः ॥

वैदेशिकानां सुधियां क्षितींद्रः तादृग्विधामारभटीं समीक्ष्य ।
तं व्यासयोगीशितुरानुभावं जानन्नपि त्रस्त इवावतस्थे ॥

अत्रांतरे शिष्यमुखादाकर्ण्य तथाविदमुदंतं ।

संप्रेषितेन पुरतो विकलय्य पत्रीं तांशैबिकेन तरसा यतिकुंजरस्य ।
आगच्छतो नृपसभां गगनावगाही तालध्वनिस्समुदजृंभत संभ्रमेण ॥

तदानीं

कल्प्यमानजगदद्भुतमोदः कथ्यमानपरतंत्रविभेदः ।
विद्विषामभवदाहितखेदो व्यासयोगिजयतालनिनादः ॥

आकर्ण्य तावदवनीरमणेन योगी प्रत्युद्गतिं कृतवता विनयेन दत्ते ।
पीठे, घनाघनइवाद्रितटे न्यषीदन्मंदस्मितोदयतृणीकृतवैरिसंघः ॥

आसनाद्युपचितं महीभुजा व्यासयोगिनममुं विरोधिनः ।
नासहंत दमघोषजादयो वासुदेवमिव पार्थपूजितं ॥

ते च दर्पोन्मत्तैर्बिरुदपत्रिकायास्तथाभूतेन छेदने द्विगुणित रोषावेशा विमतसुमतयो यूथपतिमिव मतंगजाः प्रवावदूकतातिरेकेण धिषणमपि तृणायमन्वानं बसवाभट्टनामानं कंचनकालिंगमनीषिणं पुरस्कृत्य भगवता तेन तापसकेसरिणा सह विजिगीषया पक्षद्वयस्थापनावतीं कामपि कथां प्रारभंत ॥ तत्र यथापूर्वं निर्व्यूढेपि सकले संधाबंधे ।

विकचवदनारं(स्यं)‡ विवादयिषोर्यते
बकुलधवला दंता(वेलाकनवल्गु)§रितस्ततः ।

---

‡[भं] § [क्रिड़ु]

गगनतटिनीपूरागभीर(मध्व)मतांबुधे
प्रतिभटसुधी(प्रज्ञापद्मावलीर्नव)*चंद्रिकाः ॥

सुधापरिमिलोर्मिलास्सुरसरित्प्रवाहाभटी
किरीटतटकुट्टनप्रकटपाटवोद्दामराः ।
त्रयीयुवतिचूलिकासुमनसो यतिव्यासरा
ङ्गिरोनृपसभाभुवं ध्वनिमयीमिवातन्वत ॥

किं वा भूमीधरालीपतनपरवशः प्रौढदंभोलिघोषः
कल्पांतोज्जृंभिझंझाक्षुभितजलनिधिः सार(हल्लोहली)† किं ।
किं वा दंभोलिधाराापतनपरिलुठद्ब्रह्मभृद्ब्रामघोषः
किं घोणीशानघोणाहतबलिसदनप्रोत्कटध्वानलक्ष्मीः ॥

इत्युत्प्रैक्षंत वाचा(भटि)‡मरिसुधियो व्यासभिक्षोरुदग्रां ॥

परस्परोज्जृंभितयुक्तिगुंभाः समुल्लसत्ताद्दशवीरवादाः ।
अथो तदानीमुभयेपिधीराः क्षणादिव त्रिंशदहान्यनैषुः ॥

अन्येद्युरेव विस्मयमानैस्सर्वैरपि सभ्यैरुपलाल्यमानवाग्वैखरी-प्रभावः स भगवान् झटितिप्रयुक्तैरनभिहितग्राह्यैरज्ञानादिभिः पशुपति-रिव शूलशिरोभिस्त्रिभिः कांश्चिदाख्यायमानवसाग्रहिणीयैरप्राप्तकालप्र-मुखैर्जनार्दनइव भुजदंडैश्चतुर्भिः कांश्चिद्भाषितगृहीतप्रपुरोगमैः फल्गुन इव शरनिकरैरमोघैर्निग्रहैः कांश्चिद्विमतविबुधलोकान्सलीलमेव निरा-कुर्वन्निजयशःप्रपंच इव दिशामंडलं महतीं विजयलक्ष्मीं समा-श्लिषत् ॥ तावदपयशसा सह दीर्घीभवंतं निश्वासं दधतां मध्ये तेषां ॥

वैलक्ष्यमारचयतोपि कलिंगसूरेस्तस्य प्रदातृमणिना मुनिना वितीर्णे ।
मध्येनरेंद्रसभमप्रतिभां गतस्य वैवर्ण्यमेव वपुषि प्रकटीबभूव ॥

---

* [प्रज्ञांबुजावलि]  † [कोलाहलः]  ‡ [मारभटी]

केषांचिल्लालांबुनासाक, महांक्रिया प्राशुष्यत् । परेषां स्वेदेन सममानंदो निरगलत् ॥ इतरेषामाभीलेन सह लज्जा समजनिष्ट । अन्येषां विस्मयेन सार्धं साध्वसमवर्तत । एतेषां आत्मनिंदया सत्रा-स्वमतसंदेहः प्रादुरभूत् । अपरेषां स वासरः स्वप्नसमय इवालक्ष्यत । तदनु भगवान्यतिकुलावतंसो व्यासोपि चेतसा विस्मयभरं शिरसा श्लाघाकंपं चक्षुषा हर्षबाष्पं वचसा विजयस्तुतिं वपुषापुलकितमुकुलं पाणिपल्लवेनांजलिं यौगपद्येन बिभ्राणेन नरसमहीपालेन पश्यतांप्रत्य-र्थिनां समक्षमेव समर्पितैः प्रकटितदुग्धडिंडीरपिंडपांडिमोपहसनैर्दुकूल वसनै मेरुतटवास्तव्यचारणोपवनकूपगभीरिमकलहैर्हाटककटाहैश्च कुरु-विंदशलाकानिर्मितेनाकलितमृदुलशिखावल(य)पिंछदलावली पवित्रेण धवित्रेण च परिणतामलपृथुलनिस्तुलमुक्ताफलखचितया चरणतलपुस्तक विन्यासकबलिकया मणिपादुकयुगलिकया च विशंकटनिकटतटिनी तटाक दीर्घिकोदारकेदारिकारामाभिरामैर्ग्रामैः कांचनशिबिकाकुंभचामर विविधजनपदमठालयमणिपीठिकाभिः परिवासितो राजसदनात्सर्वैरपि सभासद्भिरनुगम्यमानः पुंखानुपुंखविजयतालकोलाहललेलिह्यमानसकल-दिग्वलयो विस्मयमानहृदयैः पौरजनैः प्रतिविशिखं बहुमान्यमान-विद्यावैभवो मंदंमंदं निजमावासं प्रत्यासदत् ॥

प्रावादुकस्य परिपंथिजनस्य जेता योगीश्वरो नरपतिश्च तथा वदान्यः ।
अन्योन्यमुच्छ्रितकृपारसभक्तिभाजौ व्यत्यस्तवासभवनाविव तावभूतां ॥

धानुष्कवत्तस्य वदान्यभावो न्यपातयद्वद्धयशःकलापः ।
पंक्तिमहावापलतो विमुक्तां सन्मार्गणानां धनलक्ष्मणादौ ॥

क्षोणीवल्लकितल्लजे जितमहामेरूदयास्ताचल
स्थूलालाबुफले विशालतटिनीतंत्रीसमावेल्लिते ।
तन्वानो महतो गुणे कतिपयग्रामान् हसन्नादरं
व्यासो ब्रह्मसभामुदे यतिपतिर्ग्रामान्बहून्व्यातनोत् ॥

तस्मिन्यतौ वितरणेन धनाधिनाथांस्तन्वत्यधिक्षितितलं सकलान्बुधेंद्रान् ।
सर्वज्ञतामपिवहन्नविवेद देवः को वा सखेति कुलशैलसुतासहायः ॥

एवमेव स मुहुर्मुहुर्यदुपतिरिव सुभद्रानंदहेतुना विजयेन क्रमेण विमतमतं खिलीकुर्वाणः सलिलसेचनेनेवारामं वैदिकाचारप्रवर्तनेन धर्मसंचयमुदंचयन्विश्राणनकुंजरविशदचामरायमाणयशःप्रकाशो लोकद्वयकुशलागमसाधारणद्वारायमाणचरणारविंदसेविनां शिष्य वर्गाणां तत्वबोधोपदेशेनानन्यसुलभमुक्तिमत्तकाशिनीघटनपटीयसीं हरिभक्तिमुद्दामयन् चूडामणिमिव कोटीरो भूपतिसभां भूषयन् भूयसी स्समास्सुखमतिष्ठत् ॥ ततस्स महनीययशःप्रचारो नरसनृपतिविक्रमगतिनामभिः वीरनरसिंहकूलंकषगुणसंपदः कुमारस्य भुजचंडिमसहचरीं विधाय महतीं वसुमतीमनवरतमधिसुधर्ममरगाणिकागणवीणागुणपथ पथिकनिजविक्रमभोगावलिश्रवणजनितविस्मयेन पुरुहूतेनाहूत इव दानवबलविजयाय चारणशातोदरीकरांजलिशतप्रकीर्यमाणनंदनकुसुम मधुरझरीपरिरंभशिशिरीक्रियमाणचत्वरीं त्रिदशनगरीं लोचनयोर्गोचरी चकार ॥

स बभार ततो वसुंधरां चतुरंभोनिधिचारुमेखलां ।
कुलशैलकुलानि केवलं जगतोदिक्करिभिस्सहांचयत् ॥

तस्याभीक्ष्णंजैत्रयात्रासुखेनाधूलीपालीचूलितान् सिंधुबंधून् ।
दानांभोभिस्त्वंगदुत्तुंगभंगैःप्रत्यापत्तिंप्रापयामासपाणिः ॥

विद्यापुरीगिरिदरीविहिताधिवासं कीर्तिच्छटासटमुपायचतुष्टयांघ्रिं ।
श्रुत्वैव वीरनरसिंहमहीपतिं तं दिग्वारणैरसममराति मृगा विबिभ्युः ॥

आरब्धघोरसमराजिरगोचरारिनारीजनास्मितसुधाकरकृष्णरात्रिः ।
तस्यप्रतापसुहृदाकरवालवल्ली श्वश्रूत्वमापसुरवारविलासिनीनां ॥

तत्प्रतापदहनस्य सर्वदिक्क्रोड दुर्ललन केलि शालिनः ।
तापभारमिव सोढुमक्षमोनीरधौ सनिममज्जबाडवः ॥

तेन सकलगुणगणमणिखनीभूतेन विवाहविधिनेव प्रकटितकरग्रहणेन चंद्रमसेवान्वर्थराजशब्देन पुरहरेणेवाचलकोदंडेन हेरंबेणेवरण सहायशरजातेन योगपथेनेव समुज्जृंभमाणप्रतापानलमंडलदुर्निरीक्ष महावीरपरिवृतेन पोषकेणप्रश्रयस्य, सादिनाराजतुरंगभद्रपीठेनधैर्यसाम्राज्यस्य,पुण्यकीर्तनेन वसुधाधिपेन, हंसेनेवकमलाकरः, प्रत्यहमुपसेव्य§कृतयुगसमयइव धर्मैकसहायः कुशध्वजइव श्रुतकीर्तिप्रभावो देवकीनंदन इव नरकविध्वंसिचरितः लक्ष्मीवक्षोजइवाच्युतप्रतिष्ठापित पृथुलाग्रहारो, वीणागुणइव श्रुतिमार्गसमुन्मेषणजागरूकः कोकलोकइव भूयिष्टविप्रयोगो,मलयगिरिरिवसदानंदस्पर्शनो,मन्मथइवसन्निहितसुमनोमार्गणो, वक्षश्शंकुर्विपक्षाणां, गरलग्रंथिमुकुलःकलिगुणानां, बिरुदडिंडिमः पुंडरीकाक्षभक्तेः गिरिकंदरोधैर्यकंठीरवस्य मणिकुंभो मध्वमत गोपुरस्य, दौवारिकोनियमकोशस्य, भगवान्सतपोनिधिः निरवशेषित सकलदुर्वादिकुलगर्वतयानिराकुलमानसःसकलधर्मजीवातवेतत्वमतस्थापनाय तात्पर्यचंद्रिकातर्कतांडवन्यायामृतप्रमुखानि निःश्रेणिकुग्रंथानीव महनीयार्थगर्भितानि नूपुराणीव दृढपदबंधनानि, मुनिकुलानीवाबाधित

---

§[मानः]

योगानि, भार्गवचरितानीव जीवहरिभेदनपरायणानि सुधानिष्यंदनानीव विबुधलोकसेव्यानि प्रमदाजनमनांसीव प्रौढतरमानानि गीर्वाणवृंदानीव धिषणाकारीणिताराणीव शंसितविधुमुख्यभावानि राजकृत्यानीवालीक-वादिमर्मभंजनानि महीयांसि भूयांसि क्रमेण व्यरीरचत् ॥

तस्माद्यते-स्समुपसृत्य दिगंतरेभ्यस्तानि श्रुतानि मुहुराददधिरेबुधेंद्राः ।
अश्रांतविष्णुपदसेवनजागरूका वारीणि सागरपतेरिव वारिवाहाः ॥

विसृमर(महमि)*थ्याज्ञानांधकारभिदाकृता
महितविभवं संतन्वत्याच मध्वमतांबुधेः ।
विमलितमभूद्योगि व्यासाननेंदुसमुत्थया
सपदिभुवनं (†) तात्पर्यचंद्रिकयातया ॥

व्यासयोगिलसदुक्तिनर्तकीकल्पितं कमनतर्कतांडवं ।
पश्यतस्सदसि, कस्य मानसेऽतृप्तिरादित पदं विपश्चितः ॥

न्यायामृतं निगमवारिनिधेर्गृहीत्वा श्रीव्यासयोगिहरिणा प्रवितीर्यमाणं ।
पीत्वा भृशं, सुमनसो धिषणाभिरन्यान्सर्वानमंसत, तृणाय, सपत्नवर्गान् ॥

एवं भगवतस्तस्य तादृक्षांप्रचुरशास्त्रप्रणयनप्रवीणतां लोका-लोकाशिलातलचंक्रमविलासलोलकेसरिनिकर दायादशंकांकूरणकारणं यशःप्रसरणं च द्वीपांतरभूपालसंप्रेषितप्रधानपुरुषैरसकृत्समर्प्यमाणानि बहुविधोपहारपूजनानि च वीक्षाविशेषमात्रेण निग्रहानुग्रहकरण-समुदग्रकौशलभाजनं तेजश्च वितरणलवावलेपदुर्ललितनिर्लिंपोपवन-प्राशस्त्यपारणलंपटं पाणितलपाटवं च विलोकमानस्सवीरनरसिंहभूपति-राक्रम्यमाणइव मोदै, रालिंग्यमानइव विस्मयैरालिप्यमानइव विनयै-

*[जगन्मि] †[सर्वं]

रारुह्यमाणइव रणरणकैरवलंब्यमान इव श्लाघनैरजादिवदशरथोवासिष्ठं पितुराधिकमेव भक्तिभारेण तं यतिवरिष्ठमभ्यर्चयामास ॥

ततोपयाते बहुवासरपरंपरापिचंडिलेसमये ।

कृष्णे कनीयसि महीयसि सद्गुणौघैर्विन्यस्य भारमवनेर्मकुटेनसाकं ।
धीराग्रणीर्दिवमगात्सनृपस्वधर्मे प्रोत्तुंगकोशगणनामिव कर्तुकामः ॥

तदनु समस्तभुवनमंगलकंदलसमयसलिलधारायमाण शासन च्चातुरीको विविधसुचरितचकोरनिश्शेषकबालितधुंधुमारादि वसुंधराधुरंधरयशश्चंद्रिकामंडलः प्रतिभटराजमहिषीकुचकमलांतरचारिहार हंसावलिसमुच्चाटननवमेघमालायमानकरवालस्सकललोकांगीकृत शास्त्रः शेषइव गृहीताहीनभावो, नारायणइव द्विजवरसंगप्रियः, सुरपतिसुधर्माधिरूढो, विकर्तनइव वृत्तलवित्रप्रतापपरिपूरितादिग्मंडलः, सत्कविरिव विबुधजनोपलाल्यश्लोकसंदोहः, कोदंडदंडइव गुणप्रवणः, भृगुरिव जनितकाव्यः, कलभइवांतस्थितदानवारिः, कुशध्वजइव जनकानुवर्तिचरितः, सरित्प्रवाहइव निजशब्दसंदर्भः, गौरिव निराकृत कविकुलकोलाहलः, हरिवंश इव युद्धसमुद्धतबलः परदारविमुखोपि रिपुनृपतिखंडनपरःजैवातृकोपि निष्कलंकः सर्वज्ञोपिजिंहगसंगपरिहीणः महासेनोपि स्निग्धतारकः,लोकबांधवोपि कुवलयक्षेमंकरः, नरेंद्रोप्यज्ञात भुजंगव्यापारः, सुबाहुरपि रामानंदमूर्तिः, अभीमोपि दुश्शासननिग्रह जातप्रीतिः, अपामरोपि सन्निहितसुमनोगणः, शिरोमणिर्भूपतीनां नभोमणिर्विपक्षांधकाराणां, ग्रामिणीर्धन्विनां,अग्रिणीर्वैज्ञानिकानां,पारदृश्वा सकलविद्यानां सकृष्णरायो जलनिधिपरिधानप्रसाधितं धरावलयं

भुजावलयमिवा(तीतलायां)‡बभार ॥ समरमहीषु दृढपाणिकृपाणलता-समजनिसततं विविधवीर्यविलासनिधे विबुधविमानसौधनिगमोपविधि प्रण(मि)§विरोधियोधे ॥

कालांबुदावलिरुचा करवालपल्यां तस्य प्रतापतपनेनसमुज्वलेन ।
श्रीकंठहासधवला जनितायशः श्रीः कार्ये गुणानितनियं कलुषी चकार ॥

तास्मिन्प्रवीराप्रसरे रणेषु द्विषां समु[स्वास]*यितुं स[मुं]†धे ।
स्वर्वासिनस्ते स्वयमभ्यकांक्षन्कूलंकषां कौशिककोपमुद्रां ॥

तस्य च सकलभूपालसार्वभौमस्य विजयमंगलयात्रायां दिशि दिशि विचरतः पुरस्सरायमाणं प्रलयकालप्रकटितनटनजटाटीरधूर्जटि निटिलतटनयनपुटकूपीटभवसाटोपशिखाछटाटवीविघटितब्रह्मांडस्फोट-नरटितपाटवपरिमोटनलंपटं पटहध्वानमाकर्ण्य सर्वतः संप्रधावितानां विरोधिवसुधाधिपानां, विपिनभूमय एव राजधान्यो, गिरिकंदरा-ण्येव मंदिराणि, शिलातलान्येव सिंहासनानि, पादपमंडलान्येवात पत्राणि, समीरणाएवतालवृंतानि, चरणावेवोपवाह्यौ, दावानला एव दीपिकाः,कीचकाएवकुशीलवाः,पंचकाएवालीकवादिनः,कंदमूलप्रदेशा एव कनककोशानि, झर्झरा एव धारागृहाः, स्वकराएवारालिकाः, स्वस्तिकबंधान्येव प्रच्छदवसनानि, जानून्येवावरोधनानि, महीतलान्येव मंचानि, बभूवुः ॥ तादृशेन सकलगुणगणसंकेत मदनेन प्रांशुना, नय-विचाराभ्यां,मांसलेनकीर्तिकरु‡भ्यां,दुराधर्षेणशौर्यगांभीर्याभ्यांललितेन विद्यासुषमाभ्यां, प्रसाधितेन सौजन्यवितरणाभ्यां, प्रवणेन भक्तिविन-याभ्यां,चित्तानुवर्तकेन भागवतमूर्धन्येन तेन कृष्णमहीपालेन त्रिसंध्यं

‡[तिलीलया] §[यिर्ना] *[त्साद] †[मिं] ‡[णा]

कुलदेवतेव मकुटतटमालतीकुसुमशेखरीक्रियमाण नखमयूखजाते महा-
नुभावे मार्तांड इव मरीचिप्रकांडैस्संतमसमंडलानि प्रतिभटबुध-
डिंभक भूधरडंभारंभसंभेदनजृंभिजंभरिपुदंभोलिघोषायितैर्गंभीरैर्वाग्गुंभैरे-
वोपहतप्रचंडानि खांडनिकपाषंडमतानि कथावशेषं खंडितवति भगवति
तस्मिन्व्यासयोगिनि पुनराहितावतारमिव भुवनमभूत् ॥ तथाहि ॥
चिरादारोपितात्परिवादादिव मिथ्यात्वादमुच्यतझडितिप्रपंचः, शल्यश-
लाकयेव लक्षणयाच निर्वेदमसर्वेपि वेदव्याहाराः प्रकृतिधुरं बिभरां ब-
भूवुः,विधु(तमभिधेयाप)§स्मृतयःआश्चर्यभूतां तात्पर्यसरणिं प्रकटयामा-
सुर्बोधोपपादननिपुणानि, पुराणानि निरंतरं प्रावर्तंत रंभाकुचपरिरंभादि
परमार्थप्रयोजनविगलितव्यावहारिकफलरोगा, यागाः । जवपरभिदा-
वदावदेन तत्वबोधेन निर्निरोधेन बभूवे । अरमरंरम्यतरम्येदेवता
तारतम्ये नारायणमुख्यभावविवरणा. पाराय,[*] विचारणोल्बणाजनानां
धिषणा । अक्षीणलक्ष्मीसहायाचरणभक्तिभाजनमानसा बभूवुरिहैव सारू-
प्यभा(जा)†इव शंखचक्रलांछनाःसकलद्विजातिसंघाः समस्तबुधनिधान
भूतोवृषः कृतयुग इव गर्जन् चतुर्भिः पदैः स्वैर्य(माणमज)‡निष्ट अथ
जातुचिद्यामममात्रं गगनतलमधिरूढे भगवति (पुटाकि)§नीरमणेसमाप्य
वैभातकीं नियम (इव)* महांतस्सर्वतः प्रत्यग्रसुधाद्रवालेपमसृणितद्विरद
रदनैरिवविरचितं व्याख्याविलासकौशलगूढाभ्य(ससयि)†षया क्षितितल
मुद्भिद्य मंटपाकारेण परिणतमिव कुंडलिसार्वभौमं, भणित माधुरी
पराजितया सुधया निजमंडलैः नियमएवोपहारीकृतं दिगंतचारिणीभि-
र्यशः छटाभिर्बंदीकृत्योपनीतामिव चंद्रसदनं, स्वप्रतिष्ठापनप्रसन्नेन

§[ताभिधेया अपि] *[ण] †[ज] ‡[माव्यत] §[पद्मि] *[क्रिया] †[सि]

धर्मेण निरंतर सेवनायेव निजांशपरिकल्पितं विरहासहिष्णुतया महीतलमवतीर्णमेव प्राग्जन्मवाहनराजहंसं व्याख्यामंटपमधिवसंतं कैटभभेदिनाभिपुंडरीकपुटवासिनमिव भगवंतं हिरण्यगर्भं, कलशसागरजठरोदयजुषमिव कमलिनीबंधुं ऐरावतकुंभपीठभास्वरमिव सिंदूरतिलकं कैलासशैलमेखलाप्रतिफलितमिव कनकगिरिशृंगं, पुरस्कृतयतिकुलानां पुस्तकविभागालंकृतपाणितलानां वाग्वैखरीनिराकृततया शरणागतानामुत्तुंगानामिव सरस्वतीसुरसरित्पूराणां संख्यावतामप्यगणनापदानां कर्मठानामप्यनिवार्ययोगानां गृहमेधिनामंतेवासिनां वेद शिखरार्थत(त्वमर्थं)‡व्याकुर्वंतं मध्वमतविजयशंखायमानेन कंठनालघुमघुमितेन कालमेघमिव गर्जितेन गगनकटाहमापूरयंतं वामेतरश्रवणा(वणी)§वलंबि मौक्तिकाक्षसूत्रेण चक्रवाकावसज्जितमृणालिकावलयेन नालीकेन वदनेन भासमानं राद्धांतनिर्णयप्रकाशिकया व्याख्यानमुद्रिकया पृष्टजन्माभ्यासेनाप्यन्यसूरयः भवद्भिरेतावदपि सादृश्यं न भजेरन्निति शिष्यान् प्रतिगणनास्तचक्रमिव प्रकाशयंतं जानुभागनियंत्रित योगपट्टिकया व्यत्यस्तचरणतया तपनीयवेणुकांडघटितमिव सरस्वती पीठं तं भगवंतं व्यासयोगिनं रभसादासाद्य विशकोशस्तदनंतरं कर्णिका मुकुलचिह्नितकर्णविवरस्कंधावसक्तचर्मकः खर्वपर्वदंडः कालायसनिर्मितेनेव कर्कशेनातिप्रमाणेन वपुषा लक्ष्यमाणः दौवारिको रचितांजलिरानमय्यपूर्वकायं प्रश्रयेण दूरतस्थितो व्यजिज्ञपत् ॥

द्वारि कृष्णनृपतिस्समेत्य सस्वामिनः सहपुरोहितादिभिः ।
दर्शनावसरमीक्षतेधुना पाकशासनइवाब्जजन्मनः ॥

---

‡[त्वं] §(वाणी)

तावत्प्रवेशनविधौ गुरुणानियुक्तैश्शिष्यैरुपेत्य विहितावसरःप्रधानः
भक्त्या नृपो भगवतः पदपद्म§मौलिमवनौ नमयांचकार ॥

भूप(यू)*थोपचरितं पुलकोदयश्रीः स्पष्टीभवद्विपुलभक्तिरसप्रचारं ।
दूरीकृता(नि)†कमपृच्छदथेंगितज्ञो योगीशिता,नवसदागमनस्य पातुं ॥

तुष्यन्नभीष्टां स्वयमेव पृच्छां व्यातन्वते व्यासयतीश्वराय ।
कृत्वांजलिं कृष्णधराधिनाथो विज्ञापयामास विनीतपूर्वं ॥

स्वामिन्प्रतिभटवादिविजयेषु भगवद्वचो(‡)पलायितमिव स्वदे(श)§गूढंविच(रंतं)*सच्छास्त्रंसुत्रामजालस्य,प्राणभूतं मायामतस्य,तत्वं व्यामोहकशब्दाभिधेयस्य,भूमिमनृतस्य, दुष्टपक्षं बंधिग्राहमिव गृहीत्वा शुकनीयाकारायमपुस्तकायामाबध्य विद्याधरपात्रनामा कलिंगाधिपतिः कैश्चिदहंयुभिः विपश्चिद्भिः प्रबलितोत्साहो भगवते व्यासयोगिने प्रदर्शनीयो दुस्त(†)युक्तिसहविस्तारितोयं महान् ग्रंथइति स्वसेनापतिकरेमह्यं (प्रैषतत्)‡ ॥ तदवश्यं तमेतं कतिपयैर्दिनैरेव दुर्लंघ्याभिर्वचोयुक्तिभिर्भगवान् शरद्वलाहकमिव झंझाभिश्श(§)कर्तुमर्हतीति पुस्तकां सन्नि(धां)* संदर्शयामास ॥ व्यासतपोनिधिरपि तामादाय रहसिसूचित विमतमतामवतिः पुरस्तादेव भूभृतस्तस्य मुहूर्तमात्रे बह्वीभिरतिवज्रपाताभिरुपरिदूषणानवप्रकाश(प्र)दायिनीभिर्युक्तिपरांपराभिःशतशः खंडयित्वा पुनरपि कलिंगाधिपतये झडितिग्रंथमेनं प्रेषयेति तस्मै भूपतये प्रादात् ॥

विलोक्यवाचां विभवं तदी(यं)§ विशेषतो विस्मयमानचेताः
कृष्णक्षितींद्रः कृतसंप्रणामस्तस्मादनुज्ञाप्य सगेहमाप ॥

---

§[युग्मेसद्यःस्व] *[स्त्व] †[ह्वि] ‡[भिः] §[शे] *[रत्] †[र] ‡[प्रैषिषत्] §[क्ली] *[धौ] †[यं]

यावंतो विषयाहृता भुजबलं यावत्सपत्नाजिता
यावंतश्च वदान्यता करसरोजाताश्रया यावती ।
यावत्यो धनसंपदो गुणगणो यावांश्च यावद्यश
स्तावत्कर्तुमियेष पूजनमसौ श्रीव्यासभिक्षोर्नृपः ॥

इति व्यासयोगिचरिते पंचमोल्लासः

---

अन्येद्युरेव नृपतिप्रहितःपुरोधास्साकं प्रधानपुरुषैः सचिवैरुपेत्य ।
तं व्यासयोगिनममुं तपसां निधानं (वि)‡ज्ञापयद्विनयभावविनम्रमौलिः ॥

भगवन्निदानीं खलु ॥

सतुनृपतिरमात्यै स्सार्धमास्थानमागाद्वलभिषु विशिखानां वैजयंत्योनिबद्धाः ।
तरलनव§पुष्पास्सर्वतोराजमार्गा गगनतलमशेषं गाहते तूर्यघोषः ॥

स्वामिन् भवंतं स्वयमध्वरस्थैराकांक्षते भूरमणोभिषेक्तुं ।
कूटाग्रभागं कुलभूधरस्य प्रसूनजातैरिव पारिजातः ॥

तं भक्तिपल्लवितमागमनोत्सवेन स्वामिन् प्रसीद बहुमंतुमपारकीर्ते ।
पुष्पांजलिः प्रतिकलं भगवन्नरस्य कोणेपि यःकलयते कुलदैवभावं ॥

एवंकारं, तेन पुरोधःप्रधानेन संप्रार्थ्यमानस्सभगवान् व्यास तपोनिधिः क्षणं विचिंत्य भक्तवत्सलतया करुणामसृणहृदयः सभाजिगमिषया मणिबृसीवरादुदस्थात् ॥

गोविंदतापसमुखैः कुशलाग्रगण्यै रंतेवसद्भिरखिलैरनुगम्यमानः ।
मंदं मठात्सनिरगाद्वदनारविंदा द्वेदैःपुरस्कृत इव प्रणवो विधातुः ॥

---

‡[व्य] §[सु]

घंटास्वनोमध्वमतद्विपस्य त्रयीमयीतिस्तनयित्नुघोषः ।
तस्याथतालध्वनिरुज्जजृंभे श्रीव्यासभिक्षोश्शिबिकापुरोगः ॥

यां यामतीत्य स(म)*निर्विशिखामयासीत्सासासमुत्थितजनांजलिराजिपूर्णा ।
उन्नालदंडसरसीरुहकुड्मलानां साधर्म्यकेलिमतनिष्ट शरन्नदीनां ॥

राज्ञां सभांक्षौमवितानयुक्तां व्यराजयद्व्यासयतीश्वरोसौ ।
शरत्पयोदावलिसंकुलांता माकाशसीमानमिवाब्जबंधुः ॥

तस्मिन्नृपस्सविधमागत इत्यमात्यैस्साकंसभांगणतलात्त्वरितैरुदस्थात् ।
पूर्वाचलाश्रयिणि पूषणि, पद्मवाटात्सौरभ्यपूरइव चंचलचंचरीकैः ॥

उत्थाय स निखिलैस्सामंतमहीपालैर्झडिति सीमंतितोपांत सरणिं नरपतिरात्मानमनुकंपयानुग्रहीतुमापतंतं, कमलबंधुभवनवापिका सतीर्थमिव कनकचतुरंतयानपराध्यर्मध्यमध्यासीनं, कालांजनरसनिर्णेजनसंस्क्रियासमुन्मिषिताक्षरमणिवेदिकायां करकमलमधुपधोरणिकाया मिव पुस्तकविभागरेखायां निभृतनिक्षिप्तचक्षुषं नासिकानालभाग प्रतिफलितेनेव नयनयुगलेन स्वच्छतरोपलोचनगोलकेनानुमितवार्धकदशातिशयंधर्मशास्त्रभूष[†]वरवालहस्तेनेवधवलचामरिकायुगलेनपार्श्वतः परिवीज्यमानं, वैदिकसरणीनर्तनचरणमणिमंजीरसिंजितैरिव पुरतस्सरैः कनकतालध्वनिभिस्सुरपथकटाहं तुंदिलयंतं, मध्वमुनींद्रप्रकरणैरिव मूर्तिमद्भिः शिष्यैर्ब्रह्मसंघैरासेव्यमान परिसरं, तं भगवंतं यतिकुंजरं सरभसमुपसृत्य तच्चरणनखमणिकिरणाजिघ्रावग्रिमभागेन किरीटिनामहतीमनन्यसुलभां धन्यतामाजहार ॥

तत्र भूपश्शरत्काले राजहंसमिवांबुजे
स्वर्णपीठे स्वयंदत्ते व्यासभिक्षुं न्यवेशयत् ॥

---

*[मु] †[क]

अहमह मिकयेवस्वामिपादारविंदप्रणतविबुधयू(प)‡ स्सालहल्लोहलश्रीः ।
प्रहतकुशलवाद्या प्रांतधावत्पुरोधाः क्षणमजनिसभा, सा कौतुकेनेव सृष्टा ॥

तत्र स्फुरन्मकुटकोटिषु बिंबरूपं तं योगिनं सरसिजासनमेवबुध्वा ।
उन्मस्तकीकृतकरांजलिवारिजानि तस्मै नृपावलिरिवासनयांचकार ॥

तदनु सकलदिग्मुखमुखरीकरणनिपुणताधुर्येषु मंगलतूर्येषु । भक्तिविनयपरमानंदकंदलितसुहृदयेषु राजनिचयेषु, समापितसकल संविधानसंपादकृत्येषु अमात्यभृत्येषु, निरंतरोद्घुष्यस्वस्त्ययनसूक्त पदवीसमापितेषु पुरोहितेषु, निरवद्यविद्यावैभव श्लाघाकंपमानशिरस्सु सुमनस्सु, परिसरपापठ्यमाननानावादविजयबिरुदावलिपक्ष्मलित चाटुप्रपंचेषु कविसंचयेषु, आकौमारचरितारंभगंभीरयशस्तुतिकृत केलिकेषु विस्मयस्मितपक्ष्मपुटलोचनेषु पौरजनपदेषु, स किल कृष्ण महीपालः स्वयमेव करकमलेनादाय कनककुंभमिमं भगवंतं व्यासताप समादरान्माणिभिरभिषेक्तुमारभत ॥

तं व्यासभिक्षुं सकलैस्सरत्नैर्भूपोभिषिंचन्पुरतो बुधानां ।
वाराशिपुत्रीमकुटाग्रभागमाशावशानाथ इवाबभासे ॥

शास्त्रार्णवाः षडपि, तेन सुखेनपीताः
श्रीव्यासयोगिपतिनेति चिरायभीता ।
आत्मोद्भवैर्मणिगणै रवनींद्रमूर्ति
स्तस्याभिषेकमतनोच्चतुरर्णवीव ॥

भुविनृपइव कृष्णो भूपतिर्वाबुधोवा नवमणिभिरमुंयोनार्चेति व्यासभिक्षुं ।
सकलमणिसमूह स्तंविनिंदन्निवोच्चैः खलखलइति शब्दं कल्पयन्नापभूमिं ॥

‡[थै]

तेभिषेकमणयो महीभुजा तत्रतत्र ससृपुर्निपातिताः ।
दीपिताखिलदिगंतभित्तिनाधिक्कृताइव मुनींद्रतेजसा ॥

ऊर्जस्वलैर्बहुविधैर्मणिभिर्य्यराजीत्प्राकारितस्सभगवान्प्रमुखो यतीनां ।
लोकाभिमोदनविचक्षणवर्षशंसी नानारुचापरिधिनेव नवांशुमाली ॥

तत्र भगवानर्थसरणिलंघनजंघालान्युपादानानीव तेजसां त्रयाणां, असदृशस्वतेजोबिभिक्षिषया क्ष्मातलमापतितानि सतारकदंबानीव ग्रह निकुरंबाणि, पुष्पाणीव भूपतिभक्तिविमललतायाः, स्स्फुलिंगानीव निजतपस्तनूनपात, स्समुदं(तम)§रीचिप्रपंचवंचितसभामंडलमंगलमणि दीपिकासमुन्मेषयत्नानि क्षोणीसुरयत्नविश्राणितावशेषाणि तानि राशिं कारयित्वा नानादिशांचलेभ्यस्समागतानां कुंडलाय, तुंडिराधिपानां, केयूरायकेरलानां, हारायपारशीकानां, मकुटायलाटानां, अंगुलीयकाय कलिंगानां कंकणायकोंकणानां निष्कायतुरुष्कानां चूडनायगौडानां तरलाय चोलानां, कांचीगुणाय पांचालानां अन्येषामपि भूभुजां वदा न्याग्रणीस्सभिक्षुः प्रादिक्षत् ॥

हस्तांभोरुहमानतांगुलिदलं विस्तारयद्दातृतां
विद्वद्व्राजिषु तस्य तत्र सदसिव्यासस्य योगीशितुः ।
युष्माभिर्भुविपंचजन्मभिरियं भोक्तुं ध्रुवंशक्यते
रत्नानां पटलीति सूचनमिव व्यातन्वदालक्ष्यत ॥

संभावनावाप्तिसमुन्मदानां कवीश्वराणां कमनीयवाचां ।
हल्लोहलैस्सानृपतेस्सभासीदुल्लोलकल्लोलितजालमार्गा ॥

संपच्चीस्सकलदिगंतरार्जितायाः तादृश्यानेरसमहीपसूनृतायाः ।
व्यातानीत्समुचितमेषहृत्यशेषैस्सश्लाघंसदसिजनैः स्सकृष्णरायः ॥

---

§[चन्म]

एवं समधिगतसपर्याविशेषस्सभगवान् समुत्थाय कनकासनादतिप्रगल्भेन करुणारसमंदरेण मकरंदनिष्यंदकरंबितेन अरविंददाम्नेव वीक्षाविशेषेण च सुधामधुरिमांतर्वल्लीभिर्भक्तिरसश्लाघनभारतीभिश्चक्षितिपतिं कृतार्थीकृत्य समधिरूढचतुरंतयानोवाद्यमानानवद्यमंगलातोद्यमंडलनिध्वानपिचंडलितब्रह्मांडभांडोदरेण त्वरमाणसामंतनरदेवकुमारकराधिष्ठितशुनासीरतुरगचटुलतर खुरशिखरझर्झरितधरातलविसृमरपरागकदंबजंबालितदिगंतस्तंबेरमकरटकटहेनपुराप्रधावितदंडिलोक विशालीकृतालोककोलाहलोद्वेजितश्रवणकुहरसैनिक(जं)*घानुपातेन नयेन धर्मइव साक्षादनुगम्यमानो जनमयीमिव उपहारप्रसूनमयीमिव उपायनमयीमिव अंजलिमयीमिव हर्षमयीमिव भूयसीं राजवीथीपरंपरामतीत्यकरधृतकमंडलुदंडमंडनै ब्रह्मवादिभिरपरिमितैश्शिष्ययतिकुलैरुपास्यमानः प्रतिहारपरिसरं महांतं महाश्रममशिश्रियत् ॥

भक्त्या स तत्र प्रवणीकृतांगकरांगुलीभिः कलिताधरोष्ठं ।
श्रीव्यासयोगी स्मितपूर्ववाचा तमन्वजानात्सदनायगंतुं ॥

ततः

समान्याचरितः कास्मिंचित्समान्यकृतकल्मषः ।
अत्ययेवहदत्यर्थं अत्यविंदुर्महायशाः ॥

ग्रामे व्याससमुद्रनामनिततस्तेनप्रतिष्ठापिते
तेनाखानियतीश्वरेण भुवनश्लाघ्यस्तटाको महान् ।
निद्रातुं सज्जुगुप्सितेन मुनिना पीतोपितत्सागरो
दैत्यारेरपरांबुराशिरिव यश्शुद्धांबुरुत्पादितः ॥

*[सं]

दिग्वेतंडप्रकांडस्थपुटकट(दुद)†क्षालिकाकेलिकृद्भिः
कल्लोलानां कदंबैः कबलितधरणिं कांतपाथःकलापं ।
यं संवीक्ष्य प्रमोदाद्द्रुतमवतरतः पश्चिमांभोधिबुध्या
रोध्दुं सप्ताश्वसप्तीन्प्रतिदिनमरुणो यत्र भारं विधत्ते ॥

प्रौढाः स्नातुमुपागताः प्रियतमैस्सार्धंतरंगावली
वेगोत्कूलितबुद्बुदैर्मृगदृशो यायामुहुर्वंचिताः ।
तास्ताद्वील विनम्यमानमनसो फूत्कारबुद्ध्याच्छय
त्तीरेपश्चिमशुक्तिगर्भगलितान्मुक्तामणीन्गृह्णते ॥

यत्तीरवासनिरतैर्यतिनांसमूहैर्व्याख्यायमानमुपकंठतरुप्रतिष्ठाः
न्यायामृतप्रभृतिषु प्रचुरंप्रमेयमुच्चारयंति शुकमाणवकाश्श्रुतेषु ॥
आनंदमंतेवसतांवितन्वन्तरंगबाहाधृतशंखचक्रः ।
मध्वागमाख्यागमपारगंता यो व्यासयोगींद्रमिवानुयाति ॥

किंबहुना ॥

त्वंगत्तरंगावलिघोषिताशैरंभोभिराच्छादितसार्वभौ(मः)‡ ।
यस्याभ्रनिष्यंदिसमानभासः कराइवाभांति चतुस्समुद्राः ॥

तत्रांतरे सखलुकृष्णनृपोनुजस्य नाम्नाच्युतस्य नलभोजपराक्रमस्य ।
हस्तेमहीभरणशासन लक्षण नमस्तेमणिस्तबकितं मकुटन्यधत्त ॥

तस्मिन्जलनिधिवेलावधिं वसुमतीवलयं लीलया छत्रयति सति केयूरस्य निरपायचतुरुपाये श्रीमदच्युतदेवराये ॥

कृष्णभू(§)प्रतिरायुषोऽवधौ व्यासतापसमणिं ससूक्ष्मधीः ।
स्वर्गमार्गसुखसंप्रवृत्तये चेटिकामिव जिघृक्षुरागमत् ॥

तत्र समहीपतिर्भगवंतं यतिमघवंतं नमस्कृत्य विदांवरपरलोकपथाधिरोहिणीमिव तस्य महतीमाशिषमादरेणादाय प्रयाणे लीलाविषयी

---

†[शुग] ‡[माः] §[मि]

कृतनदनस्य देवकीनंदनस्य पुनरपि स्मारयन्नंबरौकःकदंबानि बहु-
जन्मसुकृतेन वासववास्तव्यभावमभजत ॥ तदनु तदनुजस्समग्रगुण
ग्राममौक्तिकमणिगणताम्रपर्णीसैकतायितचेतोवकाशश्शुभ दिनरणमुखा
भिमुखवनीपकविमतावनीपकदंबकनिरवाधिविधीयमानदानद्वयी लीलाभि
प्रहरीकीलालप्रवाहप्रणीततरंगिणीसहस्रस्वयंग्रहोत्सवसुखभवानुभवचतुर
चतुरक्रुपालवाचालवीचीसूचितनिजभूमिसीमाजलधरलक्षितटिद्घटानिरा
घाटक्रीडनाडंबरक्षेमंकरमेघंकरसमयस्संततसंतमसनिरंतरसंक्रांतचक्रवाल
शैलोच्चयपश्चाधकटकतटपरिसरकासारचिरकालशयालुकैरवकाशयसौख-
मयबिका(य)*मानयशश्शशिप्रकाशमाविष्कृतोपायचतुष्कप्रवणितशुष्क
मदतुरुष्कलुष्कराजक चूडापरिष्कारमणिनिष्क्रांत रोचिष्कलापपुष्करित
चरणपुष्करोधरायुवतीश्वरोमताचारमहीविरोधपारायणपरावनीशपराभावुक
परकामनिराश्रयमाण भगीरथपङ्क्तिरथनहुषांबरीषमरुत्तनयपरीक्षिदुन्मु-
खमहिलेदुरंतशातकुंभस्तंभसौभाग्यगभीरिम कुंभलिकायमानभुजाशिखर
मंजुलपंजरनिवासगलत्सर्वसहाशारिको नलिनासनललनाहंसिकासंसेव्य-
मान वदनकोकनदस्वच्छंदनिष्यंदमानफणितिरसपारणलोलुप कविलोक
लोलंबपृथुलभुजबलावलेपसंदीप्तिपूर्वदेवनंदीकरणकांदिशीकपुरंदरपू [
] यणपारायणनारायणचरणस्मरणांकूरणपंतूपकरणपकोन्मेष
श्रीमदच्युतदेवनृपतिरधि(कम)† धिकां (नासीनमासी)‡[ ]
तारिरासीमांतवमन्ति(शा)§मशासीत् ॥ संखेसंखेलभाजःप्रतिभटपरभूपाल
कोटीरकोटीवल्गत्खड्गा [ ] गान्विनोरंचितमय [
] त्यक्तां वैजातभंगौर्विपुलभुजबलैर्वैरिभिस्तेतु-

*[म्य] †[का] ‡[सीमानंनाशि] §[देश]

शस्त्रैस्सताधिर्मेपितृमृत्युरुरिव यंत्रासांत्वानो [ ] कृपा-ण्यादोर्वल्लीपद मरणसंप्रतिभटक्ष्माभृत्कीर्तिश्रीराशि बहुलक्षणदयासंपन्न क्षोणींद्रान् समितिशतधाखंडितभूपयोभिः पुनरपि समयोजतियः ।

संग्राममवर्षसमये मदीयो वर्षानसृग्बिंदुवलारिकोपान् ।
तत्रापि विद्युत्प्रसरे [ ] पांतं करवालमेघः ॥

शत्रूणां शरणं रणावनिषु यः पाणौकृपाणौजसाश्रस्तानां निजहस्ततोस्तधनुषां धिक्कोटिघाटि [ ] ना विवराणिवारु-घटागण्यान्यरण्यानि वा सिंधूनां सलिलानि वा तृणमणिप्राग्रासकर्माणि वा । तेनाजाधिराजपरमेश्वरेण नरसनरपाल [ ] परम भागवत विनयवितरण पराक्रमादिभिर्गुणैः पूर्वातिशयाल्लुराश्रीमदच्युत महाराजेन स भगवान् व्यासतपोनिधिर्विसभजक महापूजनविशेषं कंचकपालं पर्यपू (जता)‡ ततः कदाचन तत्र भगवतो व्यासतापसस्य चित्तानुवर्तकः प्रियतमशिष्ययूथनाथो दुस्तर [ ] राशिना चिकायमान शेमुषीविशेषोद्राघिषु वादगोष्ठीपराजित परानुष्ठित चर्वण विधिपरिणाकिरणमाणिस्फुटित च [ ] लसुधाद्रवालेपायित वितरणयशः प्रकाशस्वयंवरपतिस्सुधानताया विहारभूमिर्विनयस्येव जननोवेदस्य भारत [ ] परिज्ञानस्य सहचर [ ] स्साहित्यलक्ष्म्याः शाणोपलस्समाधिरत्नस्य वंशकांडोमाधव भक्तिमुक्तायाः निर्व्याजपरो पकारपारायणः नारायणयतिः क्षीरकल्लो-लितकल्लोलमल्लं मल्लपरंपराक्षालिका केलिलालितोपशल्येक गिरिशेखर मुररिपुमुखकमलवपापरिमलगर्वललितैरसहाय सहकारमूलवासरसिक

‡[ज्यत]

वलयांकपद [ ] रुहारविरहमाणसुरसरिद्रुमनिशिकर निर्वर्तितहारभरणप्रयोजनैः कांचीपुरगंधवहस्तनंधयैरर्पजितोपवनतरुमंड लैर्मंडितजनपदमंडने सकलागमकलाव्याप्रतिकुशलकोविदकलानिराकृत द्रुहिणपुरदुरहं श्रीमति गोविंदतीर्थपुरनामनिर्मिताग्रहारे वास्तव्यकुटुंबिने महोत्सेधवत्सकुलवेतंडघंटामये सोमनाथकवयेशिष्यमुखेन प्रविलसदा वर्तमिव करुणापयः प्रवाहस्य, कनकताटंकमिव क्षेमाधिदेवतायाः, परिपूजनीयमाशीः (पा)§त्रं प्राहिणो* [ ] अथ विविध महाराजलोक विशेषपूजनप्रकटित पांडित्यमहिमभारएव नानादेशसं चरमाणान्निवृत्तमात्रो महामणिमंटपमध्यभागाधिरूढः परिसरवर्तिनो बहुश्रुत्यं परिणतरसिकभावभाजःकोविदकुंजरान् स्वेनकृतंनाटकप्रकरणं श्रावयन् स सोमनाथकविरपिशुभं यौदिने तेन महापुरुषेण गुरुशिष्येण प्रतिपादितं तदाशीः (पा)†त्रं सबहुमानमादाय स्वयमेव वाचयन् वाचयित्वा कदाचन विदग्धैः नानादेशादागतैर्व्याकरणनैपुणी समु- द्रहीकृतफणिनायकाचार्यैर्विविध झंकारपद्धतिमर्मशताभारवैवधिकैश्शि- ष्यैर्विद्वाद्भिः परितस्समुपास्यमानस्य तत्र भवतः स्वामिनस्सन्निधौ प्रासंगिकेन पथा, सतिगणनेयति कविकेसरिणां विशेषेण सोभगतश्रवण सरणिमवतारिता भूत्तावकीनावैदग्धीतस्मादालोकनेनामिघलक्षतक्षत स्वामिनश्चरणकमल स्वेनं भवता त्वरितमागंतव्यमित्येतावंतं गुरुलेखा सिद्धां(त)‡ नेदा(प्य)§सां विदुषां निवेद्य मोदमानेनमनसा चिंतामेव मतनिष्ट ॥ अहो वाचामगोचरशिष्यपरमाणौ मयि नारायणतपोनिधे- र्महानयं वात्सल्यभारः इदं खलु, महापुरुषतायारूपं । यदसन्निधानेपि

§[प] *[त] †[प] ‡[त] §[प]

महतां स भासमक्षमपरजनकौशले यस्य महितं यानमुद्घटनं । नैसर्गिकीखल्वेतादृशीप्रक्रियामहाप्रकाशस्य पुरुषस्याप्यनिमित्ताप्यविसयनीया खलु जगदाह्लादानकार्मठीसुधांशोः । निस्सहा अपि महांतस्समाधेरपि परोपकारमेव खलु परमाचारं विदंतीति ॥

शिष्येणाथगुरोश्चमंत्रमहता देदीप्यमानस्सदा
तेनाशुप्रसरद्गभीरफणिति इश्रीसोमनाथः कविः ।
काले कंदलदीप्रसालकलिकाजाले शुभंयौ दिने
वीथीवेल्लिततुंगकेतनलतां विद्यापुरीं प्राविशत् ॥

तत्र सपरिच्छेदैः कतिपयैरनुगम्यमानःसंगजसार्वलौकिककीर्तिकेतककलिकाप्रवर्तितानपायप्रावृषेण्यसंपदवतारस्वप्नसमयप्रकटित समग्र सन्निधानप्रसादवेदः प्रधानावरोधविश्राणितमाणिकेयूरभूषणधारण समेध मान चतुर्विनयकवितानिताखंडपांडितीशाश्वतशिबिकाधिरूढ प्रतिभट टंकपाटनपुटत [ ] दुर्वादवादद्रुकतावरिदुपघ्नक्तिताधिषणा हंकारो नैसर्गिकानन्यसुलभसौजन्यसंवहनगुलिकासमार्जितहृदयासकसुवांतिलोकलालितचरितसोमनाथकविसुधाधिदेवताशिरःकंपन संपादन कार्मठाधुर्गणमाधुरीतिलकितफणितिभिरवतंसितरसनांचलाभ्यां स्वतिर्विबाभ्यामिव शुभगुणाभिजाताभ्यां कविभ्यां साकंप्रश्रयेण नमस्कृतः पूर्वं तन्नारायणयोगिपुंगवं पुरोधाय व्यासतपोधनस्य विश्वपावनं मठद्वारमुपासीदत् ॥ तावत्सनारायणयतिः प्रथमतः प्रविश्य तस्मै भगवते व्यासतापसाय सविनयं व्यजिज्ञपत् ॥ स्वामिन् भगवदनुकंपनीयशिष्यकुलावतंसश्चतुरशीतिलेखिनिनिरंतर विलेखनक्रियाक्षममुज्जृंभणवागुंभनवैभवस्यतादृशस्सोमनाथकविर्भवदीयचरण सरसीरुह-

सिषेविषया समागतत्यांतेवसतःन्ययुंजं तस्सेवायै भगवत्पदोदवसदो विद्वन् कवींद्रयतिनां ते वसता निवेदितवता स्नेहात्पुरस्कृत्य आनीतः प्रथमं विलोक्य चरणौ व्यासस्य योगीशितुर्दृष्टःस्वां सफलांव्यधत्त युगलीं. श्रीसोमनाथः कविः । यदीयाबिरुदावलिरेवं भुविजागर्ति । जगति परिभ्रमंति ये लीढालीढव्याकरणैकदेशाकाश लेशावलोकनमात्रा दुपजायमानया विकचधिषणया विद्रामवविद्राव्यवहारव्यापारेणसमवि-ततचिंतासतापंनृत्तचित्तौ बहुदिवससमाहितैःकतिपयपदैर्गद्यं वा पद्यम-परिसमाप्तमारचय्य बहुप्रबंधकर्तारवाश्रुप्रसरेण पामरान् भ्रामयंतं रीतिवृद्धाभ्रमातं दधाना विलसितप्रतिभां सभां विदुषां प्रविश्य साहसादायपाकैश्शोकैर्मुखरमुखरंद्राक्श्लाघयद्भिरिव शिरःकंपेन परंपर मिंगितज्ञैरधिकैः पाणिनीयैर्विडंबमानास्तुशब्दनवमालिकाकवयः तेषा मसौराजयतिप्रतीत श्श्रीसोमनाथकविलोकनाथैः । देव्याः गिरां जन्मदिनं यदीयं विधातुरासीद्विरहैकहेतुरिति यत्पितामहस्य सकल भूतलप्रतीतसप्तविंशतिनाटकप्रकरणप्रबंधमणिदर्पणप्रतिबिंबित वाग्देवता नुरागस्य षड्दर्शिनीप्राड्विवाकस्य समनुष्ठितसदाचारसप्राणित सकल स्मृतिवचनाभिधेयस्य यज्वरभास्करपौत्रस्य देवराज सोमपीथिकुमारस्य भट्टगयामूर्ति भास्करस्य जगद्विजयपद्यमिममेव सूचयते ग्रामान् बुक्कमहीपतेरपि गयामुक्तं सुत्राणतः कुप्यंगाढपतिर्गजान् गजपते र्वैकेश्वराद्वाजिनः रत्नच्छत्रकलां च चामरवतीमांदोलिकां कांचनीं लब्ध्वारायविभाटतो हरिहरान् किंभास्करो वांछति ॥ यज्जननी पितामहः कालमेघाध्वरिपुत्रं निर्विघ्नतादूयमानतातचरणमनःप्रमोद विषयद्वात्रिंशद्वर्षदेवसिद्धोपि मानयताग्रेसरविविक्तसौधतल धूल्यक्षर

परिचयादारभ्य सद्यएव सर्वश्रुतिसागरपारदृश्वत्वमादिश्य पृथग्विधसप्त तंतुक्रियाप्रबंधपरितर्पितैरमरगणैःअगणेधिकृतेनाखंडश्चंद्रमसाराकाश्चकर निशिदिनिन्निमकलाः । तादृश स्सकविवराभ्यामवरजाभ्यामलंकृतपार्श्व भागमुपसृत्य सरभसं नवचित्रकंबलशेखरितशिखरभागे महास्थानमंटप मणिवेदितलेनिषेदिवान् स्वकर्तृकाणि शास्त्रप्रमेयजालानि समंतादुप-न्यसद्भिः शिष्यवद्भिर्वालकिल्यैर्वासराधिकामिव वर्धयतोपकंठे शुचिमति र्धनवीरतुंदिभेन कुरुविंदमणिकंदलसंदानितेन तीर्थनारायणेन वदनराम णीयकपरीक्षिततया सेवितुं ससंभ्रमवात्सल्यः मकरंदपूरितेननलिनेनेव देदीप्यमान पार्श्वप्रदेशः प्ररोहितानुरागभारेणेव लोहितेन समागतेन सरस्वतीसरित्तरंगेणेव कोमलेन काषायवसनखंडेन समालिंगितवपुषं विकासविशेषप्रकाशितेन निरतिशयकरुणाप्रसादेन विलोचनेन महांतं वात्सल्यभारममर्यादयंतं भगवंतं व्यासयतिकेसरिणं शतकृत्वश्चरणार-विंदयोरमंदभक्तिरवंदिष्ट । वृद्धाय निजनिदेशाम्रेडनवशेन विहितास-नोपवेशं तं कवींद्रं सभगवान् मधुरहासिनिक्रियाक्रियोगंकुरतरलिता नरया वाचाकुशलंप्राक्षिपत् ॥ अये मेधुर [ ] ताकुटुंबिन् वत्स सोमनाथकवे कारुण्येन कमलासहायस्य वर्धसेकिमव्याहतेन मंगलेन । इत्थंकारमादरपुरस्सरेण क्षेमानुयोगेन कृत [ ] तजसेनलाभ स्सकविः स्वामिन्भगवतः कटाक्षवीक्षणघटीयंत्रप्रवहितकरुणासलिल धारासेकानुबंधकिसलयितक्षेमारामसीमस्य जनसविधभूसंचारगोपिकथं-कारंस्मृतिकल्याणेतरकार्णि इति विज्ञाप्य तद्विषयकमिदं पद्यमहरित् । वादनिपुणैर्मंदानिलराजिक्षौमनिर्मितसुधायितकीर्ते हासभूतसकलाहित विद्वन् व्यासतापसमणे विजय(सि)* । आकर्ण्यहर्षमाणेन तेन भगवता

*[से]

श्लाघाशिरःकंपनैरनितरसुलभैरुपलालितस्सकविः प्रत्यहं प्रदर्शितेषु बहुविधकलावधानपांडित्येषु प्रतिपादितैः पारितोषिकविशेषैर्बहुमान्यमानस्तत्रैव वासराणिकतिचिदवात्सीत् । अथ जातुच्चित्रैस्सुरभिलमंडले गगनपथचंक्रमणलीलया पंचषानपनीतघटिकाविभागानाखिलमेषसंविधिमशेष इति महतीमाख्यानिकामधिरूढस्यागणनीयानुभवैर्योगिभिरंतेव सद्भिस्सनकादिभिस्सरसिजासनस्येव संसेव्यमानस्य नानादिगंतरादुपजिहीर्षया समानीतैरपरवसुमतीपतिभिः प्रणामाक्रियाप्रवाणितकनकमौलिशिखरमौक्तिकनिकर निर्विशेषित चरणनखमाणिलेख कनकरसपारावार यशोभिरालंकारिकैश्च वाणीनिराकृतपतंजलिप्रायैः पाणिनीयैश्च विवाद विनोदवशंवदताचंडिमकंडूलजिह्वाप्रह्वीकारमात्रशिक्षित विपक्षपक्षयातिकैर्नैयायिकैश्च निरंतरसप्ततंतुक्रियासंतति संतत [ ] धापित पुरुहूतपुरोगमसुरनिकरचिरविरहविधुर विबुधयुवतिजनविधूतकर्णावतंसकैश्चनवरसबंधुरबहुलप्रबंध प्रणेतृभावसहजपांडित्यैरवकुंठमतिभिःकंठीरवैश्च बाहाटवचनानुलोचनविवेचनेन धन्वंतरिज्ञानेयभाग्भिः षड्भिश्च करबदरायमाण कालत्रितयविज्ञानावज्ञातसुरासुरगुरु [ ] ज्यौतिषिकैश्च संमुखीक्रियमाणचरणमणिपीठस्य भगवतो व्यासतपोनिधेस्समक्षं तत्कटाक्षवीक्षाप्रसादसूचितानुमतिस्ससोमनाथकविः अनतिसमीपवर्तिनौ परस्परोपमेयसुषुमाकारावतिमधुरशालीरवाग्भिःपरतंत्रित सामाजिकश्रवणपुटौ कंबुकंठकलकंठनामानौ पाठकौ तदीयपावनचरितकोरकितं सकलविबुधगणश्रवणाभरणं निरुदाहरणमुदाहरणमपारयत् । तदा तदाकर्ण्य भगवान् संमोदवशंवदहृदयश्लाघमानानां सर्वेषामपि तेषां सभास्ताराणां ततः कदाचनक्षीरकल्लोलिनीकल्लोलमल्लपरंपरा-

लिक्षालिकाकेलि [ † ] लितोपशल्यकारिगिरिमुररिपुमुखकमल वपापरिमलपारणगर्वदुर्ललितैः असहायसहकारमूलवासरसि कव [ ] कपर्दिकुहरविहरमाणसुरसरिदूर्मिशीकराखवीचीनिर्व-र्तितहाराभरणप्रयोजनैः कांचीपुरगंधवाहस्तनंधयैरुपजीवितोपवनमंडले तुंडीरजनपदमंडनेसकलागमकलापव्याकृतिकुशलकोविद्निराकृत द्रुहि-णपुरंदराहंकारे श्रीमति गोविंदतीर्थपुरनामनि महावास्तव्यकुटुंबवत्स कुलेनं दुघटाभिगम्यसमस्तप्रकटितसमग्रसन्निधानप्रसन्न देवेधौंतःपूरिका-विश्राणितमणिकेयूरभूषणधारणसमेधमानचतुर्विधकविताविलासस्ससोम-नाथकविस्तस्य भगवतो व्यासयोगीश्वरस्य विश्वपावनमठाश्रमद्वार मुपासीदत् ॥ यत्पिता सकलभुवनप्रतीतसप्तविंशति नाटकप्रबंध्य भावमणिदर्पणप्रतिबिंबित वाग्देवतानुरागस्य षड्दर्शिनीप्राड्विवाकव सदाचार संप्राणित सकलस्मृतिवचनाभिधेयस्य यज्व भास्करस्य पौत्रस्य देवराजसौमवीथिकुमारस्य भट्टरायमुक्तिभास्करस्यादिग्विजय पद्यामिदं ग्रामानिति पिताजननीपितामहः कालमेघाध्वरिपुत्रनिर्विघ्नता-दूयमान तातावचरणमनःप्रमुमोदयिषया त्रिंशद्वर्षदेशीयः अजनि व्यासयोगी सूक्तिं तेनाकांक्षं तलपजल्पं परेतां । लीलांबोधौ नीरधौ गंधलालां पातुं लालसाः किं भवंति ॥

॥ इति सोमनाथकवि विरचिते व्यासयोगिचरिते षष्ठोल्लासः ॥

॥ श्रीपतये नमः ॥

---

†[ विलासक ]

# APPENDIX.

*(From the Mythic Society Journal, October 1924)*

## VYASARAYA, THE HINDU UNIVERSITY AT VIJAYANAGAR AND SOME SUBSEQUENT HISTORY.

By B. VENKOBA RAO, ESQ., B.A.

New light has been thrown on Vijayanagar History by a palm leaf manuscript in Nagari characters which was found with the family of a Brahman priest of the Madhwa community who worships at Tirumakudlu in the Mysore District at the Brindavana of Sesha Chandrikacharya who was a Swami of Sri Vyasaraya Mutt, the present head-quarters of which is at Sosale in the Mysore District near Tirumakudlu. It was known for a long time that the manuscript was there, but as it is the only manuscript of the work so far known, the family who had possession of it was unwilling to part with it. Recently however it became possible for me through the exertions of Mr. M. Srinivasa-murthi, Sarvadhikari of Sri Vyasaraya Mutt, to obtain the manuscript for examination. The manuscript being not in the Devanagari but in the Nagari characters which are rather unfamiliar now-a-days, I had to obtain a skilled reader to read the manuscript. As the style is highly ornate and descriptive like the style of Bana and as the incidents described are not familiar, I had to devote my scanty leisure for many days in a period of over a month personally to examine the historical references in the book. Luckily my labours were richly rewarded and the manuscript* is now in

* If any readers of this book can secure other copies of the work they are requested kindly to send them to the publisher who will arrange to get the manuscripts used for purposes of collation and supply printed copies to the owners of the manuscripts.

